# आशीर्वचनम्

वङ्गीयराष्ट्राधिकारान्तर्गत-संस्कृतशिक्षापरिषत्सचिवेन श्रीमता यतीन्द्र-विमलचतुर्धुरीणमहोदयेन गैर्वाणवाण्यां विरचितः 'वङ्गीयदूतकाव्येतिहास' नामको ग्रन्थो मया समग्रमवालोकि। श्रीमता चतुर्धुरीणमहोदयेन आङ्गलभाषायामधिगतप्रावीण्येनाऽपि संस्कृतभाषायामेवाऽयं ग्रन्थो विरचित इति सम्मोदास्पदमिदम्।

श्रीमता चतुर्धुरीणमहोदयेन, अधिकृत्य दूतकाव्यानि गवेषणा समारब्धा। बहूनि च दूतकाव्यानि तेन सपरिश्रमं संशोध्य सम्पादितानि। मेघदूतस्याऽप्यपूर्वव्याख्यासंयोजनेन संस्करणमेकं सम्पादितम्। स्वरचित-संस्कृतव्याख्यासंवलितं घटखर्परयमककाव्यमप्यचिरादेव प्राकाशयत। प्रकृते च वङ्गीयदूतकाव्येतिहासे बहवोऽपूर्वास्सारगर्भिताश्च विषया ऐतिहासिका-स्संयोजिता येन विचारशीला विद्वद्वरा महदुपकृता भवितुमर्हन्ति। विशेषतो गैर्वाणवाणीव्यवसायिनो गवेषकाश्छात्राः निरुपममुपकारमतो लभेरन्निति नास्ति विशयः। बहूनामप्रकाशितानां वङ्गीयदूतकाव्येतिहास-ग्रन्थानां रूपविषयादिकं प्रकाशं प्रापयतोऽस्य विद्वद्वरस्य परिश्रमं श्लाघमानः परिश्रमस्याऽस्य साफल्यं, सुदीर्घजीवितां चास्य भगवतोऽभ्यर्थये।

एवं न केवलं साहित्यविषयाणां, दार्शनिकविषयाणामप्यैतिहासिक-ग्रन्थानां वङ्गदेशे तत्र तलाऽऽत्मानं तिरोधायावस्थितानां ग्रन्थरत्नानामाविष्क-रणं प्रकाशनञ्च नितरामावश्यकं देशगौरवसंवर्धनायेति सर्वसम्मतमिदं तत्त्वम्। अतस्तादृशानपि ग्रन्थानन्विष्याऽन्विष्य प्रकाशने तेषां श्री-चतुर्धुरीणमहोदयो यतेतेति विश्वसिमि।

चिन्नस्वामिशास्त्री

31. 1. 54.

# PREFACE

In my humble way, I have endeavoured to bring to light a number of Sanskrit Dūta-Kāvyas which were hitherto unknown even to Sanskrit Scholars, except probably only in name, in a few cases. The following works have hitherto been edited and published by me in the Series Sanskrita Duta-Kavya Samgraha :—

1. The Bhramara-dūta by Rudra Nyāyapancānana Bhaṭṭācārya. 2. The Vānmaṇḍana-guṇa-dūta-Kāvya by Vireśvara. 3. The Candra-dūta by Jambu Kavi. 4. The Haṃsa-dūta by Rūpagosvāmin. 5. The Pāntha-dūta by **Bholānātha of Ṭikurī.**

In 1951, a critical edition of the Meghadūta with the commentary of Bharata Mallika of Bengal was also published by me. The Introduction in English to this volume contained informations, about a large number of Dūtakāvyas and commentaries on the Meghdūta, particularly, those composed in Bengal. Most of these have not hitherto been printed.

I am definitely of opinion that no other poetical work of Kālidāsa has influenced Indian life and thought so much as the Meghadūta, and in this respect, the Meghadūta is absolutely unique. So, the necessity of writing a systematic history of the Dūta-kāvyas was keenly felt by me. But as my pre-occupations stood in the way, I have for the present undertaken the writing of a history of the Dūta-kāvyas only of Bengal. In a separate volume, however, a complete history of the Dūtakāvyas as a fascinating branch of Sanskrit literature will soon be published.

The Manodūta of Rāmarāma Śarman, the Tulasīdūta of Trilocana Dvija and several other Dūtakāvyas dealt with in this work have not as yet been printed. Attempts will be

made to publish critical editions of these works as early as possible. Copious extracts from them are, however, given in this work in order that readers may form an idea about the merit and nature of these unpublished works.

It needs hardly be stressed here that the Uddhava-sandeśa of Mādhava Kavīndra, the Pavana-dūta of Dhoyī the Uddhava-dūta and the Haṃsadūta of Rūpa Gosvāmin, and the Padānkadūta of Śrīkṛṣṇa Sārvabhauma are all very valuab'e contributions of Bengal to Sanskrit Literature. The Vaiṣṇava Faith has influenced Bengal to an unparalleled degree—and it is no wonder that Bengali mind has responded to it in no mean degree. The unique contributions of Sanātana Gosvāmin, Mādhava Kavīndra, Śrīkṛṣṇa Sārvabhauma and others will for ever remain sources of eternal enjoyment to all lovers of Sanskrit Learning.

The nucleus of this work formed the subject-matter of two successive Public Lectures delivered by me at the Asiatic Society, calcutta, in 1952. These meetings were very largely attended, particularly, by the leading Pandits of Bengal. The audience evinced a very keen interest in the immediate publication of the Reserch-results obtained at that time.

The Vangīya Sanskrita Sikṣā Parshat has prescribed in its present Syllabus the history of Sanskrit Literature as a compulsory subject in its Madhya and Upādhi Examinations. I shall consider my labours amply rewarded if students preparing for these examinations find this work helpful to them. No attempt has, therefore, been spared to make the language of this book as simple as possible.

I am extremely grateful to MM. Chinnaswami Shastri for having kindly written a Foreword to this work.

Pracyavani
3, Federation Street.
Calcutta-9
15th February, 1953

**Jatindra Bimal Chaudhuri.**

## विषयसूची

# वङ्गीय-दूतकाव्यसाहित्यस्य इतिहासः

## प्रारम्भिकी विवृतिः

संस्कृतसाहित्यस्य ये केचन विभागा वर्तन्ते तेषु दूतकाव्यसाहित्य-विभागः अन्यतरो विशिष्ट इत्यत्र न कश्चन सन्देहो विद्यते। खीष्टीय-द्वादशशताब्दीतो वर्तमानसमयपर्यन्तं संस्कृत-दूतकाव्यसाहित्यस्य परिपूर्ति-कथा सम्यग्‌रूपेण अंशतो वा धारावाहिकक्रमेण न केनापि लिपिबद्धीकृता। वस्तुतः संस्कृतदूतकाव्यसाहित्यस्य परिपूर्तेः उद्भवस्य वा पर्यालोचना अतीव आधुनिकी एव। तथापि स्वल्पया आलोचनयैव ध्रुवा प्रतीतिः स्यात् सर्वेषामेव यत् दूतकाव्यसाहित्यस्य महिमा दिगन्तप्रसारी एव। गवेषण-क्रमेण अस्माकं स्थिरा धारणा जाता यत् प्रकाशितेष्वपि बहुषु दूतकाव्य-ग्रन्थेषु अद्यापि बहूनि दूतकाव्यानि अमुद्रितानि वर्तन्ते। तेषां सर्वेषां समालोचनं सुतरां समयसापेक्षमिति मत्वा दिग्‌दर्शनन्यायेन अस्माभिः गौडीय-दूतकाव्यानाम् इतिहास एव अत्र विरचयितुमुद्यमः क्रियते। अत्र या या मतयः प्रकाश्यन्तेऽस्माभिः ताः ता एव बाहुल्येन अन्येषां बहूनां दूतकाव्यानां पर्यालोचनया केवलं दृढमूलीभविष्यन्ति—इति अत्र न मतविरोधः स्यात्। भूयोऽपि आशास्महे एतद्विषयकं ग्रन्थान्तरं पूर्णाकारेण अस्माभिः यथाशीघ्रं प्रकाशयिष्यते। एतदभ्यन्तरे सुधीभिः अन्ये केचन विशिष्टा दूतकाव्यग्रन्था अपि प्रकाश्यन्ते चेत् अस्माकं श्रमलाघवं भविष्यतीति अहो आनन्दविषयः।

संस्कृतदूतकाव्येषु आदिमो ग्रन्थः कालिदासकृतं मेघदूतम्, घटखर्परकृतं घटखर्परकाव्यं वा। मेघदूतं काव्यं वङ्गीयानां हृदयं कीदृशरूपेण युगे युगे आचकर्ष तद्विषये श्रेष्ठं प्रमाणं वङ्गीयानां मेघदूतटीकाः, यासाम् अनेका अधुनाऽपि न प्रकाशिताः। एवं वर्तन्ते वल्लभ-शाश्वत-मल्लिनाथा-दयोऽपि अ-वङ्गीयाष्टीकाकाराः। आसां टीकानां विवरणी अस्माभिः प्राच्यवाणीतः प्रकाशिते सुबोधाख्य-भरतमल्लिकटीकासमन्विते मेघदूते प्रदत्ता। तत्र मतम् अस्माकं च नितरां घोषितं यत् भरतमल्लिकटीका सर्वथा अतुलनीया इति। सर्वैरेव विद्वद्वरेण्यैरस्माकं मतमिदं समीचीनमिति समुद्घोषितञ्च। काव्यम् अन्यत्—घटखर्परनामकम्—अपि वङ्गीयानां परमादरणीयम् आसीदिति अत्रापि सन्देहो न स्यात्। काव्यस्यास्य वङ्गेषु विरचिता भरतमल्लिकटीका नाममात्रावशिष्टा, नान्या च काचन टीका लभ्यते इति अस्माभिः नवीना टीका एका विरचिता साम्प्रतम्। सा सतां मोदाय भवतु इति भगवत्सकाशे सुतरां प्रार्थ्यते।

संस्कृतदूतकाव्येषु महाकवि-घटखर्परकृतं घटखर्परकाव्यम्, महाकवि-कालिदासकृतं मेघदूतमित्यनयोः कतमत् प्राचीनतमम् इति अस्मिन् विषये निश्चितं किञ्चन मतं प्रकाशयितुं न शक्यते। घटखर्परः कालिदासश्च विक्रमादित्यस्य सभाया अलङ्कारभूतौ आस्ताम् इति "धन्वन्तरि-क्षपण-कामरसिंह-शङ्कु-वेतालभट्ट-घटखर्पर-कालिदासा" इत्यादेः श्लोकादेव ज्ञायते। एतन्मतानुसारेण एतौ समसामयिकौ एव इत्यत्र सन्देहो नास्ति। परन्तु एतयोः कः प्रथमतो दूतकाव्यं कृतवान् इति निश्चित्य को वदिष्यति? घटखर्परकाव्ये विरहिणी काचित् प्रियं प्रति मेघं दूतरूपेण संप्रेषयति, मेघदूते तु विरही कश्चित् यक्षः मेघं प्रियां प्रति

दूतरूपेण प्रेरयति इति वक्तृविपर्ययः। दूतविषये वक्तव्यविषये च सर्वथा साम्यं वर्तते। परन्तु काव्योत्कर्षविषये स्वर्गमर्त्यवत् उभयोः पार्थक्यं लक्ष्यते। एवं घटखर्परः यत् कथितवान्—

जीयेय येन कविना यमकैः परेण
तस्मै वहेयमुदकं घटखर्परेण।

इत्यनेन तयोर्विरोधश्च अनुमीयते।

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोरिति यो बभाषे।
ध्रुवं न दृष्टं कविनापि तेन
दारिद्र्यदोषो गुणराशिनाशी॥

इति, नीतिसारे श्लोकोऽयं घटखर्परविरचित इति दृश्यते। एतेनापि घटखर्परः कालिदासस्य प्रतिपक्ष आसीदिति ज्ञायते, परन्तु कस्य दूतकाव्यं प्राथम्येन विरचितम् आसीत्—अस्मिन् विषये अस्माकम् परमकौतूहलस्य निवर्तनाय न कापि गतिः इति दुःखकारणम्।

पर्वतगहनेषु उत्पत्तिस्थानात् नदी काचन प्रचलति, तत्काले तु सा न जनानां प्रत्यक्षा भवति। स्रोतोबाहुल्येन यस्मात् स्थानात्, (यथा हरिद्वारात् गङ्गा) प्रवाहः प्रचलति, तस्मात् स्थानात् सा जनानां लोचनगोचरीभवति; न च एतेन तस्मादेव स्थानात् तस्या नद्या उत्पत्तिः इति वक्तुं शक्यते। तद्वत् संस्कृतदूतकाव्यसाहित्यस्य प्रवाहः मेघदूतात् घटखर्परकाव्याद्वा आरब्ध इति न मन्तव्यम्। ऋग्वेदे दृश्यते इन्द्रः पत्नीं प्रति सरमां दूतरूपेण प्रेषितवान्। रामायणे रामचन्द्रः सीतां प्रति हनूमन्तं दूतरूपेण प्रेषितवान्। भूयोऽपि दृश्यते महाभारते युधिष्ठिरः श्रीकृष्णं दूतरूपेण

हस्तिनापुरे कौरवसभायां प्रेषितवान् । दमयन्ती नलं प्रति हंसं दूतं कृत्वा संप्रेषितवती । अस्मादेव ज्ञायते दूतकाव्यस्य वक्ता, दूतः, सन्देशविषयीभूतो नायकः नायिका वा इति पात्रत्रयात्मक-ग्रन्थरचनशैली चिरादेव सुज्ञाता संस्कृतसाहित्येषु । घटखर्परस्य उपरि महाभारतस्य प्रभावः, मेघदूतस्योपरि रामायणस्य प्रभावः बाहुल्येन परिदृश्यते । मेघदूतस्य नवनवतितम-श्लोके महाकविः कालिदासः कथितवान् "इत्याख्याते पवनतनयं मैथिली-वोन्मुखी सा" इति । दक्षिणावर्तनाथः स्वकृतटीकायां मेघदूतस्य प्रथम-श्लोकस्य व्याख्यायां कथितवान्—"इह खलु कविः सीतां प्रति हनुमता हारितं सन्देशं हृदयेन समुद्वहन् तत्स्थानीयनायकाद्युपादानेन सन्देशं करोति कश्चिदिति" इति । मल्लिनाथोऽपि दक्षिणावर्तनाथस्य मतं समर्थयते स्वकृतटीकायां मेघदूतस्य प्रथमश्लोकस्य व्याख्यायां "सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवान् इत्याहुः" इति । घटखर्परकाव्यं क्षुद्राकृति, श्लोकसंख्या चात्र केवलं त्रयोविंशतेरनधिका । मेघदूतस्य तु श्लोकसंख्या सत्यपि मतभेदे शतादधिकेति निर्विवादम् एव । अस्ति च श्लोकसंख्यायाः संस्करणभेदेन पार्थक्यम्—एकविंशत्युत्तरशत-श्लोकाः केषुचित् संस्करणेषु, अन्येषु पुनः पञ्चदशोत्तरशतश्लोकाः—केषु केषु पुनः एतयोः मध्यवर्तिनी श्लोकसंख्या । वङ्गदेशकृतासु टीकासु इत्थं श्लोकसंख्यातारतम्यं दृश्यते । मल्लिनाथोऽपि परिदृश्यमानेषु श्लोकेषु षट् श्लोकाः प्रक्षिप्ता इति कथितवान् । यथा तथा वा भवतु श्लोकसंख्या एतयोः ग्रन्थयोः—परन्तु तयोः प्रभावः परवर्तिसाहित्यस्योपरि नितरां समधिक एव । यतः स्वयं महाकविकालिदासस्य प्रतिद्वन्द्वी कविः भवभूतिरपि मन्दाक्रान्ताच्छन्दसैव स्वकीये मालतीमाधवे दूतं माधवसकाशात् मालती-मुद्दिश्य प्रेषितवान्—

दैवात् पश्येर्जगति विचरन्निच्छया मत्प्रियां चेद्
आश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ॥ इति ।

एषा उक्तिः सर्वथा मेघदूतानुकारिणी ।

न केवलं बहुसंख्यकाः टीकाकाराः इत्ययमेव विशेषो मेघदूतस्य घटखर्परस्य(१) वा, परम् एतयोर्ग्रन्थयोः श्लोकविशेषं पादविशेषं शब्द-विशेषं च अधिकृत्य परवर्तिनः कवयः बहून् ग्रन्थान् विरचितवन्तः । यथा, घटखर्परमधिकृत्य मदनकविना कृतो ग्रन्थः कृष्णलीला(२) । अस्मिन् ग्रन्थे दृश्यते, प्रतिश्लोकचतुष्टयं प्रथमादिपादाः पृथक्कृत्य संगृह्यन्ते चेद् घटखर्पर-काव्यस्य एकः श्लोको भवति । इत्थं मेघदूतस्यापि कृष्णमाचार्येण कृतो ग्रन्थः मेघसन्देशविमर्शः, कृष्णमूर्तिकृतो ग्रन्थः यक्षोल्लासः, रामशास्त्रिकृतो मेघ-प्रतिसन्देशः, रामचन्द्रकृतं वनवृत्तम् , मैथिलकृतं यक्षमिलनकाव्यञ्च । एतत्सादिषु ग्रन्थेषु नानारूपः प्रपञ्चः (Sequels) समजनि ।

परन्तु मेघविजयविरचित-"मेघदूतसमस्यालेख"-"शीलदूत"-"चेतोदूत"-"नेमिदूत"-जिनसेनकृत "पार्श्वाभ्युदय-काव्य"—आलावर्दी खाँ-पत्नीनिचय-शिक्षकनीलकण्ठविरचित-"चिमनीचरित" प्रभृतिग्रन्थेषु मेघदूतस्य समस्या-प्रपूर्तिः, शब्दपादश्लोकार्ध-समग्रश्लोक-प्रभृतीनां व्यवहारव्यपदेशेन श्लोक-विरचनचमत्कृतयश्च साकल्येन परिदर्शिता इति अहो माहात्म्यं मेघदूतस्य ।

---

(१) घटखर्परस्य यथा, शङ्कर-जीवानन्द-गोवर्धन-कमलाकर-वैद्यनाथा-दयः ।

(२) अद्यापि न मुद्रितोऽयं ग्रन्थः । १६२४ खीष्टाब्दे ( १६८० संवत्सरे ) मदनकविना विरचितः । बृटिश इण्डिया आफिस ग्रन्थागारे संरक्षितः (Eggeling, Vol. vii, 1461. )

इत्थं मेघदूतस्य घटखर्परकाव्यस्य वा भावत्रयात्मकवस्तुपद्धतिः प्रयुक्ता न केवलं प्रेमविषयकेषु; परन्तु दार्शनिकेषु, आध्यात्मिकेषु, सामाजिकेषु, व्यक्तिगतेषु व्यापारेषु च। व्यक्तिगतविषये यथा दृश्यते—कविः कश्चन स्वकीयां कवित्वशक्तिं स्वकं पृष्ठपोषकं प्रति दूतरूपेण प्रेषितवान्। ग्रन्थस्य अस्य नाम "वाङ्मण्डनगुणदूतकाव्यम्" इति। इत्थं वेङ्कटनाथ-वेदान्ताचार्यमहोदयाः वेदान्तप्रतिपाद्यविषयान् प्रतिपादयितुं हंसदूतकाव्यं रचयामासुः। सुरापानादिना ध्वंसमुखप्राप्तिमान् देशविशेषवर्तिनः कांश्चन विप्रान् तिरस्कर्तुं काकदूतग्रन्थं विरचितवान् कश्चन कविरित्यपि श्रूयते। एवंविधा अकुतोभीतिगतिः संस्कृतदूतकाव्यसाहित्यस्य।

मेघदूतस्य भागद्वयं वर्तते, पूर्वमेघः उत्तरमेघश्चेति। अनया पद्धत्या दूतकाव्यानां बहूनाम् एव भागद्वयं वर्तते। यथा, रुद्रन्यायपञ्चाननकृते भ्रमरदूते, उदयकृते मयूरसन्देशे, लक्ष्मीनाथकृते शुकसन्देशे, वामनभट्ट-बाणकृते हंसदूते, रूपगोस्वामिकृते हंसदूते च। एतेषु ग्रन्थेषु दूतपथनिर्देशो न वर्तते। यथा कुचविहारस्थ-सिद्धनाथ-विद्यावागीशप्रणीते पद्मदूत-काव्ये। मेघदूतकाव्ये यथा मन्दाक्रान्ताच्छन्दः, तथा बहुषु दूतकाव्य-ग्रन्थेषु मन्दाक्रान्ता एव वृत्तम्। केषुचिच्च दूतकाव्यग्रन्थेषु प्रहर्षिणी-शिखरिणीप्रभृतीनि छन्दांसि विनियुक्तानि कविवर्यैः।

एवं मेघदूतस्य सर्वाणि वैशिष्ट्यानि प्राथम्येन अनुकृत्य इत्थं विनिर्मिताः कालेषु गतेषु बहुषु शतशो दूतकाव्यग्रन्थाः। अहो प्रबला गतिः मेघदूतसाहित्यस्य! तस्मिन् गतिपथे कालनिर्णायकाः के ग्रन्था विद्यन्ते? महाकविकालिदासः, सम्राजः समुद्रगुप्तस्य समसामयिकश्चेत् गुप्तसाम्राज्य-समय एव मेघदूतस्य प्रादुर्भावः, अन्यथा प्रवादप्रथितस्य यशोधर्मदेव-विक्रमादित्यस्य समसामयिकश्चेत् कालिदासः, तदा ख्रीष्टपूर्व-प्रथमशताब्याम्

एव मेघदूतस्य विरचनमासीत्। तस्मात् समयादारभ्य खीष्टीय-सप्तम-शतकपर्यन्तं बहवो दूतग्रन्था विरचिता आसन् इति भामहश्लोक-दूत्तान्तेभ्यो ज्ञायते। भामहः प्राह—

अयुक्तिमद्यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः॥
अवाचोऽव्यक्तवाचश्चादूरदेशविचारिणः।
कथं दौत्यं प्रपद्येरन्निति युक्त्या न युज्यते॥ इति।

परवर्तिषु दूतकाव्येषु भागवतमहापुराणस्य महान् प्रभावः परिलक्ष्यते, विशेषतो भक्तिरसप्रधानेषु वैष्णवीयदूतकाव्येषु। भागवते च दूत-व्यापारः विचतुरेषु स्थलेषु वर्तते। तत्र जरासन्धवन्दीकृतैः राजभिः कृष्णसमीपे नृपविशेषप्रेषणम् एकः (१०. ७०. २२)। शिशुपालं परिणेतु-मनिच्छन्त्या रुक्मिण्या स्वहरणम् उद्दिश्य कृष्णाय ब्राह्मण-दूतप्रेषणमपरः (१०. ५२. २१)। गोकुलं बहुकालं परित्यज्य मथुरायाम् अवस्थितेन कृष्णेन पित्रोर्यशोदानन्दयोर्गोपरमणीनाञ्च समाश्वासनाय उद्धवप्रेषणम् अपरः (१०. ४६. ४७)—इत्यादि। तत्र शेषोक्तदूतव्यापारमूलकं माधव-कवीन्द्रविरचितम् उद्धवदूतम् अवलम्ब्य किञ्चिदालोच्यते।

अत्र हि उद्धवदूते कृष्णप्रस्थापितं गोकुलगतम् उद्धवं स्ववक्तव्य-भूषितं कृत्वा पुनः कृष्णाय प्रेषयति कापि गोपीति प्रतिपाद्यो विषयः। अस्य च प्रायेण प्रतिश्लोकम् एव भागवतीयः सुरभिरभिनिर्याति। तथा ह्यस्य काव्यस्य पञ्चमश्लोके—

क्वैषा योषित् प्रकृतिचपला पामरी कातरा च
ज्यायान् यातो यदुकुलपतेर्वल्लभत्वं क्व च त्वम्।

इत्यत्र, भागवतस्य

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः

कृष्णे क्व चैष परमात्मनि रूढभावः ।

इत्यादिश्लोकस्य सर्वात्मना अनुकृतिर्वर्तते । एवमन्यत्रापि ।

श्रीकृष्णसार्वभौमस्य पदाङ्कदूतरचना, भागवतीय-दशमस्कन्ध ३० त्रिंशाध्यायस्य २४—२६ श्लोकमूलिका ।

रूपगोस्वामिकृतस्य हंसदूतस्य नामांशेऽपि भागवतीयस्य

हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां

दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा (१०।९०।२४)

इत्यादिश्लोकस्य प्रभावो न लघुतरः ।

एवं भ्रमरोऽपि भागवते दूतः कल्पितः । यथा—

काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ।

प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥१०।४७।११ इत्यादि ।

अत एव भ्रमरदूतविरचका रुद्रन्यायवाचस्पतिप्रभृतयोऽपि भागवतस्य अधमर्णतां दधत्येवेति वक्तुं शक्यते ।

रामरामशर्मकृते मनोदूतेऽपि भागवतप्रभावः सुप्रकटः ।

खीष्टीयाष्टमशताब्द्यां जैनकवि-जम्बुना विरचितं चन्द्रदूतकाव्यम् अस्माभिः संस्कृतदूतकाव्य-संग्रहपर्याये कतिपयवत्सरेभ्यः प्राक् प्रकाशितम् ।

तदनन्तरं संलभ्यते अस्माभिः धोयीकृतं पवनदूतम् । लक्ष्मणसेन-सभाकविना धोयिना विरचितम् इदम् । अस्मात् समयाद् आरभ्य वर्तमान-समयपर्यन्तं ये ये दूतकाव्यग्रन्था वङ्गेषु विरचितास्तेषां संक्षिप्तं विवरणं समालोचनमुखेन अस्मिन् ग्रन्थे प्रदत्तम् ।

रामरामशर्मकृतं मनोदूतं विलोचनद्विजकृतं तुलसीदूतम् इत्यादिकाः कतिचन दूतकाव्यग्रन्था अद्यापि न मुद्रिताः। यथा एते ग्रन्थाः शीघ्रमेव प्रकाश्यन्ते, तद्विषयेऽस्माभिः प्रयत्नः क्रियते। इत्यवसरे तु काव्यरसिकानां मोदाय हिताय च भूयांसः काव्यांशा एतेभ्य उद्धृता अस्माभिः अस्मिन् दूतकाव्येतिहासग्रन्थे।

अस्मिन् ग्रन्थे वर्णिता दूतकाव्यग्रन्थाः, विशेषतः पवनदूत-हंसदूतो-द्धवदूतोद्धवसन्देश-मनोदूत-पवनदूताख्याः वङ्गीयकवीनां प्रकृष्टाः कृतय इति नात्र कश्चन सन्देहावसरः। वङ्गदेशः सर्वथा भक्तिधर्मप्रवणः इत्यस्मात् दूतकाव्येषु अपि भक्तिधर्म एव भूयसा प्रपञ्चितो वर्तते।

राजकीयसंस्कृतशिक्षापरिषत्परीक्षासु संस्कृतसाहित्यस्य इतिहासो नचिरेण कालेन अवश्यपाठ्यरूपेण छात्राणां पठनीयो भविष्यति। छात्राणां तेषां साहाय्यकार्थं विशेषेण विलिखितोऽस्माभिरयं ग्रन्थः। भगवान् प्रसन्नो भवतु।

---

# वङ्गीय-दूतकाव्येतिहासः

## ( प्रस्तावना )

नत्वा महद् भूतमचिन्त्यमाद्यं समाधिसाध्यं निभृतं गुहायाम् ।
वङ्गेषु तैस्तैः कविभिः कृतानि दूताख्य-काव्यानि समुच्चिनोमि ॥१॥

कुर्वे पूर्वं समुद्देशं तत्राहं कवि-काव्ययोः ।
पुरावृत्तबलोपात्तात् तयोः प्राचीनताक्रमात् ॥२॥

प्रस्तव्ये दूतकाव्ये स्मृतिसृतिमयते यस्य संज्ञा पुरस्ताद्
औचित्यात् कालिदासः कविकुलगुरुरित्यादरात् स्मर्यते सः ।
पश्चाद् धोयीः कविक्ष्मापतिरपि पवनं दूतयँल्लक्ष्मणाग्रे (१)
दूतं कुर्वन् मनः स्वं हरिचरणयुगे वश्यवाग् विष्णुदासः(२) ॥३॥

विप्रोऽन्यो रामरामो भगवति च मनो दूतमन्यत् प्रकुर्वन्(३)
दूतं कुर्वन् कवीन्द्रः सदसि मधुरिपोरुद्धवं माधवाख्यः(४) ।
रूपो गोस्वामिभूपो व्रजयुवतिजने सन्दिशन्नुद्धवं प्राक्(५)
पश्चाद् हंसञ्च दूतं मधुरिपुमधुराराजधानीं नयन् सः(६) ॥४॥

रुद्रः सीतासमीपे भ्रमरमुपनयन् दूततां न्यायवाच-(७)
स्पत्याख्यः कृष्णपार्श्वे विदधदथ पिकं दूतमन्यं मनीषी(८) ।
हंसं दूतं द्वितीयं भगवति रघुनाथादिदासः प्रहिण्वन्(९)
श्रीकृष्णः सार्वभौमो भगवति विदधत् तत्पदाङ्कं च दूतम्(१०) ॥५॥

---

(१) धोयीः—पवनदूतम् । (२) विष्णुदासः—मनोदूतम् । (३) रामराम-द्विजः—मनोदूतम् । (४) माधवकवीन्द्रः—उद्धवदूतम् । (५) रूपगोस्वामी—उद्धवसन्देशम् । (६) रूपगोस्वामी—हंसदूतम् । (७) रुद्रन्यायवाचस्पतिः—भ्रमरदूतम् । (८) रुद्रन्यायवाचस्पतिः —पिकदूतम् । (९) रघुनाथदासः —

गोपीं दूतं प्रहितवन्नधिहरिचरणं वैद्यलम्बोदराख्यो(११)
विप्राग्र्यो वैद्यनाथो मधुपुरि तुलसीं यापयन् दूतमेकम्(१२) ।
तर्कालङ्कार-कृष्णो जनकदुहितरि प्रेषयंश्चन्द्रदूतं(१३)
वातं दूतं प्रकुर्वन् मधुरिपुसविधे न्यायवित् कृष्णनाथः (१४) ॥६॥

घटखर्परकाव्यञ्च मेघदौत्यसमाश्रयम् ।
रचयन् कालिदासो वा सोऽथवा घटखर्परः(१५) ॥७॥
चन्द्रदूतं तथा कुर्वन् कविर्जम्बूसमाह्वयः(१६) ।
प्राचीनावनुचिन्त्येते प्रसङ्गादन्ततो मया ॥८॥ युग्मम् ।

कृतिरवर-कवीनामप्रसिद्धाभिधानं
विलसति यदतोऽन्यद् वङ्गदेशीय-दूतम् ।
अनिल-दकमुखं तद् वच्मि नैकैकशोऽस्मिन्
ननु तदुपलभन्तां वाचका भूमिकांशे ॥९॥

उपहृतमिदमास्ते पाठकानां पुरस्ताद्
अनुपम-गुणगुप्तं भावभाषाभिदीप्तम् ।
सरस-हरिकथाढ्यं भूयसा भक्तिपूतं
सुमतिभिरुपसेव्यं दूतकाव्यं तदेतत् ॥१०॥

---

हंसदूतम् । (१०) श्रीकृष्णसार्वभौमः —पदाङ्कदूतम् । (११) लम्बोदर वैद्यः —गोपीदूतम् । (१२) वैद्यनाथद्विजः —तुलसीदूतम् । (१३) श्रीकृष्ण-तर्कालङ्कारः —चन्द्रदूतम् । (१४) कृष्णनाथन्यायपञ्चाननः —वातदूतम् । (१५) घटखर्परः —घटखर्परकाव्यम् । (१६) जम्बूकविः —चन्द्रदूतम् ।

## (१) धोयीकविकृतं*

## पवनदूतम्

धोयीकविकृतं पवनदूतनामकम् इदं दूतकाव्यं वहुभिः प्रकारैः परम-रमणीयम् इत्यत्र कोऽपि सन्देहो नास्ति। दीयतां तावद् दृष्टिः अस्य प्राचीनतायाम्। विना मेघदूत-घटखर्परकाव्ये विना च जम्बू-कविकृतं चन्द्र-दूतम् एतस्मात् पूर्वभावि किमपि दूतकाव्यं न दृश्यते। यथा इदं प्राचीनत्वे मेघदूतादेः अनन्तरम् एवमेव लेखनपद्धत्याम् अपि मेघदूतादिनैव तुलनीयम् इत्यत्रापि न कोऽपि वचनावसरः। तथा च अत्र प्रसादगुणभूयिष्ठा वैदर्भी रीतिः प्रतिष्ठां गता पाठमात्रेणैव हृदयम् अधिकरोति वाचकानाम्। श्लोकानां न विवरणापेक्षा, प्रायशो न च अन्वयापेक्षापि। दुरूहार्थ आभिधानिकः शब्दः प्रायेण परित्यक्तः, सुबोधार्थः प्रकृतिप्रत्ययोगजन्मा शब्द एव अत्र विशेषेण आदृतः कविवरेण।

विषयवस्तु च अस्य सर्वातिशायि इति वक्तुं शक्यते। दूतान्तरेषु इव नात्र कल्पितः पुराणादिपरिचितो वा नायकः, किन्तु इतिहासप्रसिद्धः। तत्रापि वङ्गेषु सुगृहीतजन्मा विद्वज्जनवन्धुः महाराजो लक्ष्मणसेन इति जितं वङ्गीयैः। एष धोयीकविः तस्यैव लक्ष्मणसेनस्य सभाकविरिति स्पष्टमुक्तं महाकवि-जयदेवेन गीतगोविन्दग्रन्थे "विश्रुतः श्रुतिधरो धोयीः कविक्ष्मा-पतिः" इति। लक्ष्मणसेनस्य शासनकालः ख्रीष्टीय-त्रयोदशशताब्द्या अन्तिमो भागः, तस्मात् ग्रन्थ एष तस्मिन्नेव समये कृत इति निःसन्दिग्धमेव।

---

* कवेरस्य नामभेदा वहवो दृश्यन्ते—यथा धूयीः, धोयीः, धोईः, धोयीकः।

अत्र च कविवर्येण उपमोत्प्रेक्षातिशयोक्त्यर्थान्तरन्यासमुखाः केचन एवालङ्काराः प्राधान्येन सन्निवेशिता दृश्यन्ते। ते च लेखक्रमेण विषय-वस्तुस्वरसात् आगताः न तु प्रयासेन सृष्टाः। न कृतः खलु अलङ्कारेण लेखस्य स्वच्छन्दगतिभङ्गः, न वा विहितं विषयबोधवैधुर्यम। तत्र रामेश्वरसेतुबन्धम् अधिकृत्य कृतः श्लोक उपमोत्प्रेक्षयोः दृष्टान्तत्वेन उपस्थाप्यते—

क्रीडाशैलं भुजगनगरीयोषितां कौतुकं चेत्  
सेतुं याया जलधिकरिणः शृङ्खलादामदीर्घम्।  
भाति स्नेहादवनितनयाजीवनाश्वासहेतो-  
र्लङ्काद्वीपं प्रहित इव यो बाहुरेकः पृथिव्याः॥

इति। उदात्तालङ्कारे च—मार्गनिर्देशप्रसङ्गेन—

हित्वा काञ्चीमविनयवतीमुक्तरोधोनिकुञ्जां  
तां कावेरीमनुसर खगश्रेणिवाचालकूलाम्।  
कान्ताश्लेषादपि खलु सुखस्पर्शमिन्दुत्विषोऽपि  
स्वच्छं भिक्षाप्रवणमनसोऽप्यम्बु यस्या लघीयः॥

इति। समुच्चये अर्थान्तरन्यासे च—पवनयाच्ञावसरे—

त्वत्तः प्राणाः सकलजगतां दक्षिणस्त्वं प्रकृत्या  
जङ्गलं त्वां पवन मनसोऽनन्तरं व्याहरन्ति।  
तस्मादेव त्वयि खलु मया सम्प्रणीतोऽर्थिभावः  
प्रायो भिक्षा भवति विफला नैव युष्मद्विधेषु॥

इति च। एवम् एव सर्वे श्लोकाः सरलाश्च सरसाश्च सलीलगतयश्च कवि-क्ष्मापतेः। परम् एतद् अवश्यम् अङ्गीकार्यं यद् एतत्काव्यपठनावसरे स्वत एव मेघदूतश्लोका मनसि आपतन्ति, तदियं कवेः अनुकरणप्रियता वा

स्वतः सम्भविनी लेखस्य स्वच्छन्दगतिर्वा कालिदासादीनाम् इव जन्मान्तरागता प्रतिभा वा, येन अननुकरणीयं मेघदूतम् अपि कविरयं स्व-कवितया स्मारयति। परम् अन्यदपि चिन्तनीयम्, यत् तथाविध-रमणीयस्य तदात्वे तन्मात्रदूतकाव्यस्य प्रख्यातस्य मेघदूतस्य प्रभावः तदनन्तरभाविनि दूतकाव्ये कथं वा परिहर्तुं शक्यः कविना। अत एवात्र मेघदूतस्य छायैव दृश्यते न तु स्वरूपम्। एवं च—

"श्रीखण्डाद्रेः परिसरमतिक्रम्य गव्यूतिमात्रं
गन्तव्यस्ते किमपि जगतीमण्डनं पाण्ड्यदेशः।"

इति,

"लीलागारैरमरनगरस्यापि गर्वं हरन्तीं
गच्छेः काञ्चीपुरमथ दिशो भूषणं दक्षिणस्याः॥"

इति,

"स्निग्धश्यामं गुरुभिरुपलैः पर्वतं माल्यवन्तं
पश्येरुत्तम्भितमिव पुरः केशपाशं पृथिव्याः॥"

इत्यादि च छायायोन्यपि न आत्मना मेघदूतमनुकरोति। अत एव "संसर्पन्ती प्रकृतिकुटिलां दर्शितावर्तचक्रां" [३४] इति "देवं नीचैर्विनयचतुरः कामिनं प्रक्रमेथाः" [१६] इत्यादौ च पदादिसादृश्यमपि नात्यन्तं दोषाय।

इदानीम् अस्य मार्गक्रमम् आलोचयामः—

कविरयं दाक्षिणात्याद् मलयपवनं दूतं विधाय वङ्गेषु प्रेषयति। तत्र मलयपर्वतस्य अनतिदूरे पाण्ड्यदेशः, तत्रत्या नदी ताम्रपर्णी, उरगपुरं राजधानी च। तत्रैव सेतुबन्धो रामेश्वरमन्दिरं च। ततः सुवलानदी-काञ्चीका काञ्ची नगरी। इत्यन्तः चोलदेशः। ततः केरलेषु प्रथमं कावेरी सरित्, ततो माल्यवान् पर्वतः, ततः पञ्चाप्सरो नाम सरः, गोदावरी नदी चेति,

सर्वे अन्ध्रदेशीयाः। ततः कलिङ्गाः, विन्ध्यपादे विशीर्णा रेवा ययातिनगरी च इत्यन्ता दाक्षिणात्यमार्गाः। अतः परम् औदीच्याः। तेषु च एक एव गङ्गातीरवर्ती सुह्मदेशः। सुह्मेषु विष्णुमन्दिरं शिवनगरं च, शिवनगर-त्रिदिवसरितोरन्तरा "बल्लालक्षितिपतियशोबान्धवः सेतुबन्धः", तत्रैव गङ्गातो निर्गता यमुना च। अतः परं वङ्गेषु "विजयपुरं नाम" वङ्गराजधानी। एतद् एव नगरमुद्दिश्य पवनो दूतीकृत्य प्रेषितः कुवलयवत्या।

अत्र प्राथमिकश्लोकत्रयेण [१–३] विषयवस्तूपन्यासः, ततः श्लोक-चतुष्टयेन [४–७] दूतनियोजनम्, ततः अष्टाविंशत्या [८–३५] श्लोकैः मार्गकथनम्, परतः सप्तदशभिः [३६–५२] 'विजयपुर'रमणीवर्णनम्, ततो द्वाभ्यां [५३–५४] राजभवनवर्णनम्, ततः पञ्चभिः [५५–५९] लक्ष्मणसेननृपतेः तेजःप्रकर्षादिकथनम्, द्वाभ्यां [६०–६१] वचनावसर-कथनम्, ततः अष्टात्रिंशता [६२–९९] सन्देशकथनम्, एकेन वक्तव्य-विनिगमनम् इत्येवं शतश्लोकम् इदं दूतकाव्यम्। अतः परम् अपि चत्वारः श्लोकाः कवेः स्वस्य स्वकृतेश्च प्रशंसासूचका आशीःसूचकाश्च अत्रोपलभ्यन्ते, न तैः काव्यवस्तुनः कोऽपि उपकारः क्रियते।

इदानीम् अस्य विषयवस्तूनि संक्षिप्यन्ते :—

अस्ति मलयाचलप्रदेशे कनकनगरी नाम गन्धर्वाणां पुरम्। आसीत् तत्र कुवलयवती नाम काचन गन्धर्वतनया। सा कदाचिद् भुवनविजय-प्रसङ्गेन तत्रागतं गौडीयं लक्ष्मणसेन-नामानं नृपम् अवलोक्य कामायत्ता बभूव। विरहकातरा सा वसन्ते दक्षिणात उत्तरस्यां दिशि प्रवृत्तं मलयपवनमनुबभूव। ततः तं दूतीकृत्य वङ्गेषु लक्ष्मणसेनस्य राजधानीं प्रेषयितुं तम् आह—हे मलयपवन, त्वया इतः प्रस्थाय गौडदेशं गत्वा मम दशा नृपतये लक्ष्मणसेनाय वक्तव्या। पथिक्रमेण पाण्ड्य-चोल-केरलान्ध्र-

कलिङ्ग-सुह्म-प्रभृतीन् जनपदान्, ययातिपुर-भुजगनगर-काञ्चीपुरप्रभृति-पुराणि, ताम्रपर्णी-सुवला-कावेरी-पञ्चाप्सरोगोदावरी-रेवा-गङ्गा-यमुना-प्रमुखा नदीः च अतिक्रम्य वङ्गदेशं गच्छेः। तत्र 'विजयपुरं' नाम लक्ष्मणसेन-राजधानीं गङ्गया क्रोडीकृतां पश्येः। तत्रापि सप्तमकोष्ठकं राजभवनं जगदिव एकत्र पिण्डीकृतं प्रविशेः। तत्र महापराक्रमं राजानं समुचिते अवसरे समासाद्य मद्वचनाद् ब्रूहि—हे देव, मलयपर्वते कुवलयवती नाम काचन गन्धर्वकन्या वर्तते। दाक्षिणात्यान् नृपान् विजित्य प्रत्यावर्तनसमये त्वं तस्या हृदयम् आदाय आगतवान्। ततः प्रभृति सा त्वयि निहितहृदया विरहेण कातरा जाता। विधिना कामकार्मुकतया निर्मिता सा मुष्टिमेय-मध्या कृता, विरहे पुनः भृशाकृशतया कार्मुकस्य ज्या इव संजाता। सखीकर्णच्युतं तालीपत्रम् अपि त्वया प्रहितं प्रेमपत्रं सम्भावयति, क्रीडाशुकं त्वदागमनं पृच्छति। इत्येवं सा विरहस्य चरमावस्थां प्राप्ता वर्तते। सा रम्याणि चन्द्र-चन्दन-कमल-कुवलयादीनि द्वेष्टि, सखीभिः सम्भाषितापि नालापं करोति, भ्रमररुतेन मूर्छति च। अनन्यव्यापारा सा त्वयि स्वावस्थानिवेदनगर्भां कवितां रचयन्ती दिवसान् अतिवाहयति। विद्याप्रभावेन सर्वत्र अप्रतिहतसञ्चारापि सा प्रत्याख्यानभयेन स्वयं त्वत्समीपे न आगच्छति। इति।

अत्र काव्ये पूर्वरागस्य अवस्थाः—"चक्षूरागस्तदनु मनसः सङ्गति-र्भावना च" इत्यादिरूपाः सम्यक् एव प्रकटिताः। तथा च (१) 'जित्वा देवं' [६३] इत्यादिभिः श्लोकैः चक्षूरागः। (२) 'विन्यस्याग्रम्' [६४] इत्यादिभिः मनःसङ्गतिः (३) 'त्वद्वक्त्रानुस्मरणरसिका' [८६] इत्यादिभिर्भावना। (४) 'धत्ते द्वेषं शशिनि' [७३] इत्यादिभिः विषयव्यावृत्तिः। (५) 'राजन्नुर्वीवलय' [८४] इत्यादिभिः निद्राच्छेदः।

(६) 'मुष्टिग्राह्य' [६६] इत्यादिभिः कृशता। (७) चन्द्राद् रम्याम्' [७७] इत्यादिभिः लज्जात्यागः। (८) 'धत्ते सद्यः' [६८] इत्यादिभिः उन्मादः। (९) 'प्रागालापाः' [८०] इत्यादिभिश्च मूर्छा अभिहिता।

एवं बहूनां सद्‌गुणानां सद्भावे सत्यपि अस्मिन् काव्ये क्वचित् किञ्चित् असामञ्जस्यम् इहापि नयनयोः आपतति। तथा च कविः द्वितीय-श्लोके—

"दृष्ट्वा देवं भुवनविजये लक्ष्मणं क्षोणिपालं
बाला सद्यः कुसुमधनुषः संविधेयीबभूव ॥"

इत्युक्तवान्। तेन च दृष्टिपातमात्रेण राजनि जातानुरागा सा लक्ष्मणसेनाय दूतं प्राहिणोत् इति आयाति। ततश्च अत्र पूर्वरागात्मकविप्रलम्भशृङ्गारो रसः, नायिका च विरहोत्कण्ठिता इति विज्ञायते। परतश्च दूतमुखेन नायिकया स्वीयावस्थानिवेदनावसरे अष्टनवतितमश्लोके—

सौधोत्सङ्गे मुकुलितदृशं तत् सखीनां पुरस्तान्-
मामासाद्य त्वमयमकृथा गोचरे यन्न वाचाम्।
तन् कुर्वीथाः सुभग न सतां गर्हणीया यथा स्यां
कन्यां लोके न खलु सुधियो दूषयित्वा त्यजन्ति ॥

इत्यादिना च स्पष्टम् एव नायिकायाः खण्डितात्वं प्रतिपादितं कविनेति प्रतीयते। द्वयम् इदं विरुद्धम् अतोऽयं श्लोकः प्रक्षेपमध्ये पातयितव्यो नवेति सुधीभिर्भाव्यम्।

अहो दौर्भाग्यं यदनेन कविवर्येण विरचितः पवनदूतव्यतिरिक्तो ग्रन्थो न अधुना लभ्यते। धोयीक-विरचिता ऊनविंशतिसंख्यकाः श्लोकास्तु परिदृश्यन्ते कोषकाव्येषु, यैं तु न पवनदूतग्रन्थान्तर्गताः। तथाच तेषां सप्तदश—सदुक्तिकर्णामृते(१), एकः जह्लणविरचितसुभाषितमुक्ता-

वल्यां(२), भूयोऽप्येकः शार्ङ्गधरविरचित–शार्ङ्गधरपद्धतौ(३), इत्थं कृतविभागास्ते वर्तन्ते । कविवर्यः स्वयमपि पवनदूतस्य चतुरधिकशततमे श्लोके "वाक्सन्दर्भाः कतिचिद् अमृतस्यन्दिनो निर्मिताश्च" इति यत् स्पष्टमुक्तवान् तेनापि अन्ये सन्दर्भास्तेन विनिर्मिता इत्यायाति । तेषामेव अंशविशेषाः कोषकाव्येषु समुद्धृताः पूर्वोक्ता ऊनविंशतिः श्लोका इति अनुमीयते ।

पवनदूतोक्ता लक्ष्मणसेनस्य दाक्षिणात्यविजयवार्ता एकान्त-सत्यभूता न वा इत्यस्माभिः अधुना विचारणीयम् । दिग्विजयक्रमेण राजा लक्ष्मणसेनः "दाक्षिणात्यान् क्षितीशान्" विजिग्ये इति पवनदूते उक्तमास्ते । तदवसरे मलयपर्वतमपि स प्राप इत्यपि तत्रैवोक्तम् ।

यद्यपि कुत्रापि लक्ष्मणसेनस्य दिग्विजयवृत्तान्त ऐतिहासिक-सत्यरूपेण न दृश्यते, तथापि लक्ष्मणसेनस्य शौर्यादिविषये महान्ति प्रमाणानि वर्तन्ते । यथा लक्ष्मणसेनविषयिणी 'मधैनगर' ताम्रफलकोक्तिः "यस्य कौमारकेलिः कलिङ्गाङ्गनाभिः" (J. A. S. B., New Seris, Vol. V, p. 473) इति । अस्मात् सुष्ठु प्रतीयते कलिङ्गदेशस्तेन विजित आसीदिति । तत्र भूयोऽपि दृश्यते—'येनासौ काशिराजः समरभुवि जितः" इति । लक्ष्मणसेनात्मज-विश्वरूपसेनस्य ताम्रफलके ( J. A. S. B., 1816, pt. 1, p. 11) दृश्यतेऽधस्तनः श्लोकः —

"वेलायां दक्षिणाब्धेर्मुसलधरगदापाणिसंवासवेद्यां
क्षेत्रे विश्वेश्वरस्य स्फुरदसिवरणाश्लेषगङ्गोर्मिभाजि ।
तीरोत्सङ्गे त्रिवेण्याः कमलभवमखारम्भनिर्व्याजपूते
येनोच्चैर्यज्ञयूपैः सह समरजयस्तम्भमाला न्यधायि ॥

इति । अस्मात् ज्ञायते उत्तरभारतभूखण्डे प्रयागपर्यन्तो भूमिभागो

जित आसीत् लक्ष्मणसेनेन। 'मधैनगर'-ताम्रफलके भूयोऽपि दृश्यते "विक्रमवशीभूतकामरूपः", अर्थात् कामरूपोऽपि तेन विजित आसीदिति। अस्मात् परिज्ञायते दाक्षिणात्य-प्रयाग-कामरूप-परिवेष्टित-बृहद्-भारत-भूभागस्य असौ विजेता बभूवेति। यथा तथा वा भवतु, पूर्वोक्त-विषयेभ्यः सुष्ठु प्रमाणितं भवति यत्, तदात्वे शौर्यादिविषये लक्ष्मणसेनस्य गरिमा कविवर्णनपदं सर्वथा धत्ते स्मेति धन्या धोयीकस्य नायकनिर्वाचन-चातुरी।

---

## विष्णुदासविरचितं

## मनोदूतम्*

खीष्टीयपञ्चदशशताब्द्यां श्रीचैतन्यदेवमातुल-विष्णुदासकविना विरचित-मिदं वसन्ततिलकच्छन्दसा। अत्र दूतः सन्देशोद्देश्यश्च द्वावेव अपार्थिवौ, सन्देश्यं वस्त्वपि अपार्थिवम्। तथाहि—स्वकृतपापानि विचिन्त्य पुराणादिवाक्यात् अजितेन्द्रियाणां कालकृतदुःखशतानि च ज्ञात्वा विष्णु-दासनामा कश्चन स्वं मनो दूतीकृत्य भगवदाशीःप्रार्थनपुरःसरं भगवत्समीपे प्रेषयति स्मेति काव्योपजीव्यं वस्तु। तथा चाद्यपद्यम्—

निर्वर्ण्य तानि रहसि स्वयमर्जितानि
भूयस्तराणि दुरितानि सुदुःसहानि।
श्रुत्वा च कालविहितान्यवशेन्द्रियाणां
दुःखान्यचिन्तयत कश्चन विष्णुदासः॥ इति।

---

* A complete MS. of this work is preserved in the India Office Library; vide Eggeling's Cat. Vol. vii. p. 1470. Ed. in Sanskrit Sahitya Parishat Series as No. 21.

तत्र आद्यश्लोकसप्तकेन [१-७] विष्णुदासस्य स्वावस्थापर्यालोचनम्, भगवच्छरणागतेरावश्यकत्वनिर्धारणम्, भगवति स्वाभिप्रायनिवेदनार्थं दौत्ये मनसो निर्वाचनञ्च। ततः अष्टादशश्लोकैः [८-२५] दौत्यार्थं मनसोऽभ्यर्थनं प्रलोभनार्थं गन्तव्यस्य अध्वनः रमणीयतादिवर्णनञ्च। ततः सप्तभिः [२६-३२] गोकुलवर्णनम्। एकेन [३३] नन्दवर्णनम्। द्वादशभिः [३४-४५] कृष्णवर्णनम्। सप्तभिः [४६-५२] यमुनावर्णनम्। ततोऽपि सप्तभिः [५३-५९] वृन्दावनारण्यवर्णनम्। ततः पञ्चदशभिः [६०-७४] कृष्णस्य वृन्दावनविहारवर्णनम्। तत एकविंशत्या [७५-९५] सन्देशकथनम्। ततश्च षड्भिः [९६-१०१] मनसः पुनरभ्यर्थनद्वारा काव्योपसंहारः।

भागवतादिपुराणपरिशीलनभावितात्मना वैष्णवेन कविना कृष्णवृन्दावनादिवर्णनायां प्राचीनैव पद्धतिः स्वीकृता दृश्यते। परं लेखस्य सरलता सरसता सलीलता प्रचरद्रूपता च निरुपमैव। कष्टकल्पना सर्वथा परित्यक्ता, परित्यक्ता च पाण्डित्यप्रकटनलालसा। यत्सत्यम् आत्मोपकृतये एव कविना काव्यम् इदं कृतम् इति नास्ति संशयः। नामत एवेदं काव्यम्, वस्तुगत्या पुनः विषयवितृष्णस्य भगवदनुसन्धानमेव। पीयताम् अस्य कश्चन मधुरिमा श्रवणपुटेन। तत्र श्रीकृष्णवर्णने—

दूरेऽपि वाङ्मनसयोर्मुनिपुङ्गवानां भूरेणुचुम्बिततनुः पशुपाङ्गनेऽपि।
यो मृग्यते श्रुतिवधूभिरपीक्षणेन गोपाङ्गनाभिरभितः परिपीयते सः ॥४४॥

इति। सन्देशकथनावसरे च

आपादमस्तकमयं दुरितार्णवान्तर्मग्नश्चिरं निगडितो हतवासनाभिः।
दत्त्वाभयं चरणतामरसं तवेदम् उद्दिश्य कोऽपि मधुसूदन रारटीति॥७५॥

दीनं यथोचितनिजाचरणैर्विहीनं हीनं परं परमपापमहाधुरीणम्।
एकं त्वदीयचरणं शरणं स्मरन्तं सीदन्तमन्तकभयादनुकम्पयेश॥७३॥

इत्यादि। महानयं हृदयावेगः कविना सरलवचसा प्रकटीकृतः। मुक्तिपथस्य अयं यात्रीति कात्र विप्रतिपत्तिः। दृश्यतां शब्दविन्याससनैपुण्यमपि। तथा च वृन्दावनवर्णने—

हिन्ताल-ताल-वट-शाल-रसालजाल-ताली-तमाल-कृतमाल-पियाल-कोलैः।
जम्बीर-वीरतरु-विल्व-कदम्ब-जम्बू-खर्जूर-निम्ब-हरिचन्दन-सिन्धुवारैः॥

अनुप्राससुभगेन कोमलपदविन्याससमधुरेण समुल्लिखितेन पद्येन दल-फल-कुसुम-प्रधानान् द्रुमान् उल्लिख्य एतैर्वृन्दावनं व्याप्तमिति कथयति—

एतैर्दलानि कुसुमानि फलानि सम्यक्
श्रीजानि-पाणिकमलग्रहमानितानि।
रम्याणि सर्वसमयेऽपि समं (१) दधानै-
र्नीरन्ध्रमावृतमनावृतपुण्यपुञ्जैः॥५८॥ इति।

एवमेव आदित आन्तं सर्वे श्लोकाः सरसमधुराः कवेः मानसभावानां दर्पण-भूता वर्तन्ते। शान्तरसात्मक-दूतकाव्येषु प्रधानतममिदम् इत्यस्माकं धारणा।

अयं विष्णुदासः चैतन्यदेवस्य मातुल इति एतद्वंशीयेन रामरामशर्मणा विरचितात् 'मनोदूतम्' इति एतत्तुल्यनाम्न एव दूतकाव्यान्तराज् ज्ञायते। एतच्च तत्रैव द्रष्टव्यम्। इति।

(१) अत्र 'शमम्' इति यथादर्शम् अशुद्धं तालव्यादिपाठं मुद्राप्य असाङ्गत्यम् आलोच्य पूर्वार्धे प्रश्नचिह्नं(?) विनिवेशयता केनचित् परार्धे "शमं दधानैः शान्तैरित्यर्थः। अनावृतपुण्यपुञ्जैः अक्षुण्णपुण्यसमूहैः मुनिभिरित्यर्थः" इति यत्समाहितं तद् व्यामोह एव।

## रामरामशर्मकृतं
# मनोदूतम् (२)

रामरामशर्मविरचितं "मनोदूतम्" नाद्यापि मुद्रितम्। अस्य ग्रन्थस्य हस्तलिखितं पुस्तकमेकं कलिकाता-आपार-साकुलार-रोडस्थ-वङ्गीयसाहित्य-परिषद्भवने सुरक्षितं वर्तते। अनेन विना नान्यद् अस्माभिरुपलब्धम्। एतदेव पुस्तकमधिकृत्य अस्माभिरत्र वस्तुवर्णनादिकं क्रियते। "मनोदूतस्य" अंशविशेष एव उपलभ्यते। उपलभ्यमाने चास्मिन् अंशे दूतकाव्यविलक्षणा काचन रीतिः दृश्यते। सा च प्रेष्य-प्रेषकयोः उक्तिप्रत्युक्तिरूपा। भूयोऽपि विलक्षणा रीतिः "परिच्छेद" नाम्ना विषयविभागरूपा। तथा चास्य ग्रन्थस्य अन्ते लिखितम्—

"इति श्रीरामरामशर्मविरचिते मनोदूताभिधाने द्विजदूतसंवादे प्रथमः परिच्छेदः।" इति

अत्र लेखनशैली नातिप्रौढापि सरलसरलैव। अशुद्धिरपि आदर्शे तत्र तत्र विलसन्ती अर्थबोधे विघ्नं घटयति। तथापि स्वरूपग्रहार्थं पाठकानां समीपे केचन श्लोका उपस्थाप्यन्ते—

यावत् स्यात् क्षितिमण्डले तव कुलं स्थास्यामि ते मन्दिरे
कृत्वाऽङ्गीकृतमित्थमस्ति भगवानद्यापि यस्यालये।
यस्यासीद्भगिनीसुतो भवतरिश्चैतन्यदेवः प्रभु-
र्यो जग्राह चतुर्मुखैर्विधवया दत्ते शुभे वाससी ॥१॥

तस्य श्रीयुतविष्णुदासकृतिनो वंशे समुद्भूतवान्
नत्वा कृष्णपदारविन्दयुगलं श्रीरामराम-द्विजः।
ग्रन्थं संरचयाञ्चकार तु मनोदूताभिधानं मुदा
मित्रापत्यभयाकुलो निजमनो दातुं हरौ व्यञ्जयन् ॥२॥

इत्यम् आद्यश्लोकद्वयेन आत्मनः कुलनामनी ग्रन्थविरचनहेतुञ्च विवृत्य प्रकृतं कथयति—

द्विज उवाच ॥

मनो दौत्यं कार्यं ब्रजपतिपदाब्जं गमयितुं
कुरु त्वं सत्कार्ये न भयमुपहास्यं त्वनुचितम् ।
यतो मुख्याध्यक्षं त्वमसि सकलार्थान् कलयितुं
महापारे घोरे तरिरिव तितीर्षोर्जलचये ॥३

मन उवाच ॥

न मे शक्तिर्दौत्ये कृतकलुषराशेः षडरिभिः
कदा नो सत्सङ्गे भुवनभयभङ्गेऽर्पयसि माम् ।
शिशौ खेलारङ्गे युवतिगणसङ्गे मम मति-
स्तथा प्रौढे ज्ञानं ब्रजगुरुकृते कोऽलमटितुम् ॥

द्विज उवाच ॥

अरे बाल्ये लीलां सकलभुवने को न कुरुते
समासन्ने प्रौढे युवतिभजना कस्य न भवेत् ।
तथा कामक्रोधप्रभृति-रिपवः कुत्र न तनौ
तथाप्येषां कोऽपि प्रतरति भवं किं न मनसा ॥५

अन्यच्च—

रथस्थं यन्ता यं पथि विपथि यत्रैव नयते
स्थितोऽसौ तत्रासीन्न खलु पुनरन्यत्र गतिमान् ।
तथा त्वं रङ्गे मां नयसि ननु यत्रैव तु मन-
स्तथैवाहं तत्रान्वगममनुयोगो मयि वृथा ॥

एवमेव चतुर्विंशत्या श्लोकैः अयं परिच्छेदः समाप्तः । अत्र शार्दूलविक्रीडित-शिखरिण्यादिच्छन्दसैव भूयांसः श्लोका लिखिताः ।

परं "किमाकारं नाथं शरणमुपयामी"ति मनःप्रश्ने द्विजेन पज्झटि-कादिच्छन्दसापि केचन श्लोकाः कथिताः। द्वयं दृष्टान्तीक्रियते—

नीरदनीरजधिक्कृतरूपं शारदचन्द्रकनिन्दितवक्त्रम्।
नीरजलोचनदर्शनपात्रं कौस्तुभराजितनिर्मलगात्रम्॥ ११

+ + +

कपटेन नरोत्तममूर्तिधरं भुजयुग्मसुलम्बितजानुयुगम्।
ध्वजवज्रसुचिह्नितपादतलं भज दूत मम प्रियनाथमिमम्॥१३ इति

कविरयं पुराणादिकं बहुधा अन्वशीलदिति सम्भाव्यते, विशेषतो भागवतम्। अत एव च तस्य काव्ये—

करे वेणुं कृत्वा लगुडमपि तुल्यैः शिशुगणै-
र्गतो गोष्ठे धेनूरवति कति वत्सांश्च कपटी।
स तैः क्रीडां कुर्वन् रविकरसमुत्तापिततनुः
पतेत् पांशौ भूयः परम-रसिकः पातयति तान्॥ १७
त्रिवक्रोऽसावापूरयति कलवेणुं यदि सकृत्
सुतां त्यक्त्वा माता पतिमपि वधूर्धावति वनम्।
अयं प्राणी न स्यात् सजलनयनो न त्रिभुवने
समुद्रा निष्पन्दा रविरपि करोग्रान् स्थगयति॥ १८

इत्यादिश्लोकाः भागवतीयान्
"वामबाहुकृतवामकपोलो वल्गितभ्रूरधरार्पितवेणुम्।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः॥ (१०।३५।२)

इत्यादि श्लोकान् स्मारयन्तो ग्रन्थकर्तुः भागवतादिग्रन्थपरिशीलन-पाटवं परिचाययन्ति। मा भूत् निपुणकविकृत-समुन्नतकाव्यतया, भक्ति-रसप्लुततया तु काव्यमिदं सर्वैरेवादरणीयम् इति नः प्रतिभाति। इति।

---

# तालिननगरनिवासि-माधवकवीन्द्रभट्टाचार्य-विरचितम्
# उद्धवदूतम्

अस्यायम् आख्यानभागस्य संक्षेपः —

"गच्छोद्धव व्रजं सौम्य पित्रोर्नः प्रीतिमावह।
गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय॥" १०।४६।३

इति भागवतमहापुराणोक्तदिशा श्रीकृष्णः स्वसन्देशभूषितं कृत्वा यम् उद्धवं वृन्दावने प्रस्थापितवान् तम् एव प्रतिदूतीकुर्वती काचन प्रधाना गोपी कृष्णसमीपे प्रेषयामासेति।

अत्रायं वर्णनीयविषयविभागक्रमः — प्राथमिक-सप्तदशश्लोक्या [१-१७] दूतदर्शनं, 'कोयं कथं कुत आगत' इति दूतस्य तत्त्वानुसन्धानं, तस्य तत्त्वनिरूपणं, तत्समीपे संक्षेपतः कृष्णविरहतिरोहितसकलसुखानां गोपीनां वृन्दावनस्य चावस्थाकीर्तनं कृष्णं प्रत्याक्षेपश्च। तत ऊननवतिश्लोक्या [१८-१०६] कृष्णम् उद्दिश्य वाचिकविरचनम्। द्वाभ्यां [१०७-१०८] सन्देशवाक्यं ब्रुवत्या एव तस्या मूर्छाप्राप्तिकथनम्। एकादशभिः [१०९-११९] उद्धवकृता तस्या मूर्छाविरामार्थं शुश्रूषा, आत्मागमनहेतोः पूर्वम् अकथनादियं विपत्तिरिति विदित्वा उद्धवस्य अनुशोचना, कृष्णदूतोऽहं भवत्यै प्रेषितं कृष्णस्य वाचिकम् आदाय समागत इति स्वागमनकारणवर्णनात् तस्या मूर्छापनोदनञ्च इत्यादिवर्णनम्। द्वादशभिः [१२०-१३१] राधाम् उद्दिश्य कृष्णसन्दिष्टसन्देशकथनम्। षड्भिः [१३२-१३७] कृष्णसन्देशस्य निगमनपूर्वकम् उद्धवकृता राधिकायाः कृष्णार्पितमनस्कतायाः प्रशंसा। द्वाभ्याम् [१३८-१३९] उद्धवप्रस्थानवर्णनम्। उपान्त्येन स्वप्रबन्धप्राशस्त्यम्। अन्तिमेन स्वाहङ्कारपरिहारः। इत्येवम् एकचत्वारिंशदुत्तरशतश्लोकात्मकमिदं दूतकाव्यम्।

अत्र निपुणेन कविना यत्रैव दूतः प्रस्थाप्यः तत एवागतं जनं दूतं कृत्वा मार्गवर्णनायासः परिहृत इति प्रथमत एव दृष्टिमाकर्षति पाठकानाम्। परं सन्देशभागस्य तथा विस्तारः कृतः यथा परिहृतेऽपि मार्गनिर्णयप्रयासे ग्रन्थशरीरं तथैव विपुलं वर्तते।

अत्र कविः प्रायेण भागवतीयानेव अर्थान् श्लोकयामासेति महानस्य भागवतानुशीलनमहिमा विजयते। न चायं दोषः, भागवतीयं वस्तु संगृह्णता कविना एकान्ततस्तन्निरपेक्षेण कथं भवितव्यमिति। यच्च क्वचित् भाषादिसाम्यमपि जातं तदपि भागवते दृढपरिचयफलमिति ज्ञातव्यम्। गृह्यताम् एकम् उदाहरणम्। अत्र दूतं प्रति राधोक्तः—

'क्वैषा योषित् प्रकृतिचपला पामरी कातरा च
ज्यायान् यातो यदुकुलपतेर्वल्लभत्वं क्व च त्वम्।'

इत्यादिश्लोकः, भागवतीयोद्धवसन्देशे उद्धवोक्तस्य—

"क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः
कृष्णे क्व चैष परमात्मनि रूढभावः।" १०।४७।५६

इत्यादिश्लोकस्य स्वरतोऽपि साम्यम् आवहति। इत्यादि। अत्र वनचरीः इति वनचर्य इत्यर्थः, वैदिकप्रथया विभक्तिव्यत्ययात्।

उद्धवसन्देश उद्धवदूतञ्चेति द्वयमेव यद्यपि तुल्यविषयमधिकृत्य अनिर्वाच्यतारतम्याभ्यां कविवृषाभ्यां विरचितम्, तथापि अस्ति तयोर्भूयान् भेदः। तत्र तावत् उद्धवसन्देशे कविः उद्धवम् ऐकान्तिकतया कृष्णस्यैव दूतं कृत्वा गोपीषु प्रेषयतीति स्थितम्। नात्र गोपीभिः सह दूतस्य कोऽपि सम्बन्धो दर्शितः। परम् तत्र कविः विरहिणो दूतप्रेषकस्य मुखेनैव विरहिणीनां गोपरमणीनां तां ताम्

अवस्थां तथा चित्रयामास यथा स्वयं गोपीभिरपि चित्रयितुं शक्यं नवेति सन्देह एव। उद्धवदूते पुनर्विरहिविरहिण्योरुभयोरेव दौत्यम् उपनिबद्धम्।

यद्यपि अत्र मुख्यतः कृष्णदूतरूपेण आगतोऽपि उद्धवः कृष्णवाचिकम् अनुक्त्वन् प्राक् एव गोपीनां सन्देशं श्रुतवानिति किमपि वैषम्यम् इव मनसि जागर्ति। तथा, गोप्योऽपि चिरप्रोषितस्य प्रणयिनः सकाशादागतं दूतं प्रियविषयकं किमपि अनापृच्छ्य स्ववक्तव्यविवक्षाव्यग्रा अभूवन्नित्यपि अलौकिकमिव प्रतिभाति, तथापि कविना स्वकाव्यस्य सुपूर्तिपालनयैव वैषम्यमिदम् उपेक्ष्यत इति ज्ञायते।

तथाहि—कुब्जापरिग्रहदोषक्षालनार्थं कृष्णमुखेन कविना यल्लिखितम्—

कुब्जामृज्वीमकरवमुरीकृत्य यन्निर्घृणत्वं
तत्तात्पर्यं विपुलमतयो नोपयन्ति क्षतिः का।
हित्वा वेशं कुवलयदृशां केशमच्छिभ्रुवं वा
क्षन्तव्यं मे नहि कुटिलतेत्येतदुन्नायकं तत्॥१२६

इत्यादि, तत् पुनः राधिकोक्त

सङ्कोचो यस्तव गुरुजने यश्च पौराङ्गनासु
व्यक्तीभूतं तदुभयमभूत् कुब्जिकोपग्रहेण॥६२

इत्याद्याक्षेपवचनपूर्वकम् एव संलग्नं स्यान्नान्यथा। तथा सन्देश-कथनानन्तरं कृष्णस्मरणानुभावात् सम्भूतां राधाया मूर्च्छां दृष्ट्वा पूर्वं कृष्णवाचिकाकथनजन्येयम् अस्या मूर्च्छेति निश्चिन्वान उद्धवः—

मन्त्री वैज्ञानिक इति वृथा मानमासाद्य माद्यन्
अद्य स्वीयां मतिपरिणतिं बुद्धवान् उद्धवोऽपि॥१११

इत्यादि यदुक्तं तदपि निरवकाशं स्यात्। किञ्च—

"रुद्धा बन्धुप्रणयपदवी लङ्घिता लोकलज्जा
मूर्ध्नि न्यस्तं पदमयशसः शङ्कितो नानुबन्धः ।
मामाराद्धुं किमिव न कृतं दुष्करं त्वादृशीभि-
स्त्यक्त्वा युष्मान् मम यदुपतेरद्य राज्यं धिगस्तु ॥" ९३

इत्यादि प्रियवाचिकं श्रुतवत्याः प्रणयिन्याः स्वभावादेव मनः क्षोभ-विहीनं भवतीति तदनन्तरं—

त्वञ्चेदानीं नगरतरुणीसार्थसर्वस्वभूत-
स्ता अप्येवं तव किमितरास्तुच्छमद्य त्वदन्ते ।
अत्यौत्सुक्यात्तदपि भवतः सम्मुखी का यदि स्यां
किं स्यादेतन्न खलु निपुणं भावयन्त्यप्यवैमि ॥९५

इत्यादीर्ष्याकषायितं वचनजातं प्रियामुखादपि न बहिर्गच्छेत्, पाठकेभ्योऽपि न स्वदेत। कविना

"विजृम्भितं यस्य किल ध्वनेरिदं
विदग्धनारीवदनं तदाकरः ॥"

इति रीत्या, "यस्या विवाहस्तस्या एव गीतमि"ति लोकोक्त्यनुसाराच्च गोपरमणीमुखेनैव तासां गोपीनां विरहगीतं गापयितुम् इष्टमासीदिति तदनुगुणतयैव सर्वमायोजितम्। उद्धवसन्देशे पुनः एकेनैव कृष्णदूतेन कृष्णस्य गोपीनाञ्च हृदयमाविष्कृतमिति न दोषः।

एवञ्च भिन्नमार्गमाश्रित्य एकस्मिन्नेव विषये सङ्गतयोरनयोः कविकुञ्जरयोः काव्यकौशलेन कथापरिपाट्या च कः प्राथम्यमर्हतीति दुष्करमेव निश्चेतुम् इति।

---

श्रीरूपगोस्वामिविरचितः

## उद्धवसन्देशः

इदं दूतकाव्यं सुगृहीतनामधेयेन महाप्रभोः साक्षाच्छिष्यवर्येण आलङ्कारिक-कविश्रेष्ठेन श्रीरूपगोस्वामिना विरचितम्। अत एव अस्य रचनकालश्च खीष्टीयषोडशशताब्दीति सुस्पष्टम्। कथावीजन्तु कविना इत्थम् उपनिबद्धम्—

सान्द्रीभूतैर्नवविटपिनां पुष्पितानां वितानै-
र्लक्ष्मीवत्तां दधति मथुरापत्तने दत्तनेत्रः ।
कृष्णः क्रीडाभवनवडभीमूर्ध्नि विद्योतमानो
दध्यौ सद्यस्तरलहृदयो गोकुलारण्यमैत्रीम् ॥

इति। एवं विरहकर्शितः श्रीकृष्णः "सखिजनसंविभक्तं हि दुःखं सह्यवेदनं भवती"ति रीत्या स्वसन्तापम् अपाकर्तुं गोपीनां च विरह-वेदनां दूरीकर्तुं द्वितीयं हृदयम् इव उद्धवं दूतीकृत्य मथुरातो ब्रज-भूमिं प्रेषयामास। भागवतवृत्तान्तानुसारी चायं कथाप्रवन्धः। अत्र एकविंशदधिकशतं श्लोका मन्दाक्रान्ताच्छन्दसा ग्रथिताः।

अत्रेयं विषयपरिपाटी—आद्यश्लोकद्वयेन कथावीजम्, ततोऽष्टाभिः [३–१०] दूतीकरण-दूतानुनय-दूतप्रेषणप्रयोजनानि। ततोऽशीत्या श्लोकैः [११–९०] मार्गनिर्देश-मार्गगतद्रष्टव्यवस्तुविवरण-व्रजमण्डलवर्णन-गोपी-चरितकीर्तनानि। ततोऽष्टाभिः [९१–९८] वृन्दावनतरूणामाशीर्वादः, गोमङ्गलप्रश्नः वृद्धगोपीनां चरणवन्दनं पित्रोर्नमस्कारश्च। त्रिभिः

[९९-१०१] कृष्णप्रियाणां गोपीनां कृष्णदर्शनसम्भूता सम्भाव्यमाना तात्-कालिकी दशा। ततः षड्विंशत्या [१०२-१२७] वाचिकनिवेदनम्। तत्र पुनः चतुर्दशभिः वृन्दावली-ललिता-विशाखादिनारीविशेषानुद्दिश्य वाचिकं प्रेषितम् अवशिष्टैर्द्वादशभिश्च राधामुद्दिश्य। ततो द्वाभ्याम् उपसंहारमुखेन दूतस्य तत्र कियद्दिनावस्थानाख्यानम्। तत्र एकेन उद्धवस्य कृष्ण-प्रीतिजननशंसनम् अन्तिमेन ग्रन्थकर्तृणा पाठकानाम् अनन्तरागनि-कामनेनेति।

अत्र पथिप्रसङ्गेन गोकर्णाख्यशिव-यमुनासरस्वतीसङ्गम-अम्बिकावन-अक्रूरतीर्थ-विश्रामभूमि-कोटिप्रदेश-भट्टीकरवन-कालियह्रद-मृगहर-यद्वहस-शाल्मलकक्षा-साहार-रहेला-शीतराव-विद्युत्कारी-सौयात्रिक-श्वेतगण्डशैल-पावनसरोवरादीनां विवरणम्। एषु गोकर्णमुखानि कानिचन स्थानानि मथुरामण्डलान्तर्गतानि, शिष्टानि तु व्रजमण्डलान्तर्गतानि। तानि पुनः कृष्णस्यैव तत्तल्लीलासाक्षितया सार्थकनामानीत्यपि कविना तत्तत्स्थान-वर्णनविधौ निरूपितम्। तथा च यत्र श्रीकृष्णः हैयङ्गवीनं चोरयन् बालकानाम् आहारं सम्पादयामास तत् स्थानं 'साहार'नाम्ना ख्यातमित्यादि।

रमणीया कवेरस्य वर्णनीयविषयसंग्रहपद्धतिः। श्रोतॄणां विरागम् अजनयतैव कविना वक्तव्यविषयाणां विस्तृतिः कृता। काव्यमिदं पठता जनेन विगमितो भूयान् अपि कालो नोपलक्ष्येत विषयस्वारस्यात्। कामम् अत्र नामपरिचयः कवेर्नोपनिबद्धः, गुणपरिचयस्तु प्रतिश्लोकं प्रतिपादं प्रति-पदञ्च समासाद्यते निरवद्यः।

अत्र च अस्माकं दृष्टिपथे पतति कवेः वस्तुविशेषमधिकृत्य वर्णनकौश-लम्। तथाहि कविरयम् अनुरक्तानां विरहिणीनाञ्च नारीणां मानसभाव-वर्णनायां यथा नैपुण्यमदर्शयत् न तथा वनशैलद्रुमादिस्थावरवस्तुवर्णनायाम्।

विषयेऽस्मिन् द्वादशश्लोकात्मककुलकेन [३६-४७] कृष्णाभिसारोत्सुकानाम्; चतुर्दशश्लोकात्मककुलकेन [५०-६३] ईर्ष्याकषायितानाम् अनुरागवतीनाम्; पुनर्दशश्लोकात्मककुलकेन [६६-७५] अक्रूरेण मथुरां नीयमाने कृष्णे भाविविरहविधुराणाम्; परतश्च चतुर्दशश्लोकात्मककुलकेन [७७-९०] विरहकातराणां च गोपीनां मानसविकारदार्ढ्यं साद्यम् आवहति। तुल्य-जातीयवस्तुवर्णनपरा अपि एते अर्धशतं श्लोकाः पाठकानां न विरागम् आगमयन्तीति महती खलु कुशलता कवितल्लजस्य। गृह्यतां निदर्शनम्—

पश्य व्रीडां सकपटमसौ तन्वती नः पुरस्ताद्
द्वारे गौरी न सरति मुहुः शौरिणाकारितापि।
आकृष्टाया गहनकुहरे वेणुविद्याविनोदै-
र्जानात्यस्याः पुनरनुपमं विक्रमं कुञ्जवीथी ॥४६॥

अत्रेर्ष्याकलुषितया कयाचिद् गौरीनाम्न्यपरा आक्षिप्यते।

राधानेत्रपथवर्तिनं कृष्णमुद्दिश्य काचिद् राधाम् आह—

यष्टिर्भूमौ लुठति तरसा स्रंसते पश्य वंशी
कंसारातेः स्खलनममलं शृङ्गमङ्गीकरोति।
दूरान्नन्दः कलयति पुरो ह्रेपयामुं न राधे
वन्दे देवि स्थगय चपलापाङ्गभङ्गीवितानम् ॥४४॥

उदाहरणेन कियद्वा तुन्दिलयामो निबन्धम्। एवमेव सर्वे श्लोका लोक-चरितचित्रणचतुरस्य पुराणकवेरिवास्य नवीनकवेः। यद्यपीयं भङ्गी कवेरस्य न निजस्वं तथापि कोमलकोमलनवतमपदविन्यासवशेन तथा मनोरमा जाता येन नवीनेव प्रतिभाति।

अर्थान्तरघटननिपुणतापि कवेः प्रीणयति पाठकसमाजम्। अपह्नुति-हेतुभूततया उपन्यस्तम् इदम् अर्थान्तरं प्रायेण कृष्णबोधकपदमधिकृत्य

कविना निरसायि। गृह्यताम् अन्यापि किञ्चनोदाहरणम्—

बाले चन्द्रावलि न हि बहिर्भूय भूयः प्रदोषे
गेहात् तृष्णावति कुरु पुरः कृष्णवर्त्मावलोकम्।
सर्वस्यान्तर्जडिमदमने पावके नाद्य लब्धे
मुग्धे सिद्धिं मम रसवती प्रक्रिया न प्रयाति॥

सख्योरुक्तिप्रत्युक्तिरूपोऽयम्। अत्र कृष्णवर्त्मपदं रसवतीपदञ्च अर्थान्तरं प्रतिपाद्य मुख्यतया अपह्नुतेः परिपोषं विदधाते। कृष्णवर्त्मा अग्निः, पक्षे कृष्णवर्त्म कृष्णागमनमार्गः। रसवती पाकशाला तस्यां प्रक्रिया रन्धनम् इत्यर्थः, पक्षे सरसेति प्रक्रियाविशेषणम्।

अन्ते च कविपरिचयम् आश्रित्य किञ्चन आलोच्यते—यद्यप्यत्र काव्ये कवेर्नाम नोपलभ्यते तथापि लेखस्वरसादनुमीयते महानेव कश्चन काव्यस्यास्य निबन्धा भवेदिति। कथम् अत्र कविना स्वनामारोपणे कार्पण्यं कृतमित्यपि चिन्तनीयमेव। केचिदिदं काव्यं वैष्णवकवे रूपगोस्वामिनः कृतिरिति कथयन्ति। वयम् अपि ओम् इति ब्रूमः। वैष्णवतोषिणीग्रन्थेऽपि रूपगोस्वामिवर्यस्य नामैव ग्रन्थकर्तृरूपेण दृश्यते। अस्मदीयः इण्डिया-अफिस-ग्रन्थागार [अधुना Commonwealth-Relation] ग्रन्थसूचीतृतीय-खण्ड एव तत्र प्रमाणम् (p. 2218.)*। अत्र वीजन्तु उपान्तिमश्लोके कविना अर्थान्तरक्रमेण 'रूप' इति 'स्वामि' इति व्यस्तपदद्वयनिबन्धनम्। तथा च श्लोकः—

गोष्ठक्रीडोल्लसितमनसो निर्व्यलीकानुरागात्
कुर्वाणस्य प्रथितमथुरामण्डले ताण्डवानि।

---

*ग्रन्थोऽयं साम्प्रतं ब्रिटिशशासनकर्तृपक्षैः प्रकाशितः। India Office Library Catalogue, Vol. II Part I, Section III

भूयो रूपाश्रयपदसरोजन्मनः स्वामिनोऽयं
तन्योद्दामं वहतु हृदयानन्दपूरं प्रबन्धः ॥ इति ।

अस्यायम् प्रकटः पिण्डितार्थः—पूर्वं बाल्ये गोष्ठक्रीडानिरतस्य तदनु यौवने मथुरायां मल्लयुद्धादिकं विदधानस्य जीवनिवहाश्रयीभूतपदसरोरुहस्य अचिन्त्यचरितस्य प्रभोः श्रीकृष्णस्य उद्दामम् आनन्दम् अयं मदीयः प्रबन्धो जनयत्विति। गूढार्थन्तु, रूपगोस्वामिनो ममाश्रयीभूतचरणसरोजस्य इत्यादिः। "नामैकदेशे नाम" इति न्यायात् 'रूप'पदेन तदर्थलाभः।

अस्य च सर्वथा दूतकाव्यत्वेऽपि 'उद्धवदूतम्' इति प्रसिद्धप्रायम् आशंसितं नाम परिहाय यद् 'उद्धवसन्देश' इति नाम कृतं कविना तस्य कारणद्वयम् अनुमीयते। दौत्यं नाम अनुजीविजनयोग्यं कर्म ; न चायम् उद्धवः श्रीकृष्णस्य अनुजीवी, तस्य कृष्णसखत्वात्। तथापि यदीदृशं दौत्यम् उद्धवेन स्वीकृतं तत् सखिबुद्ध्या स्वकर्मविधया वा, कृष्णमुखादसकृच्छ्रुतस्य कृष्णानुरक्तानां गोपरमणीनां परमप्रेम्णः प्रत्यक्षीकरणोत्कण्ठया वेति ज्ञेयम्। अत एव भगवद्भक्तः कविः वास्तवम् अपि भगवत्सख्यस्य दौत्यं कण्ठतः प्रकटीकर्तुम् उत्कण्ठायमान इव तथाविधं नाम परित्यक्तवान् इत्येकं कारणम्। द्वितीयञ्च, अस्ति चैकम् उद्धवदूतं माधवकवीन्द्रविरचितम् इतः पूर्वमेव अस्माभिरालोचितम्। तस्य चोद्धवसन्देशात् पूर्वभावित्वमनुमीयते। एवञ्च प्राचीनेन कविना प्रतिस्पर्धिता कण्ठत एव कृता मा भूदिति आकारगुप्त्यर्थमेव कविः स्वकृतेः अन्यथा परिकल्पितवान् नामेति।

---

श्रीरूप-गोस्वामिकृतं

## हंसदूतम्*

महाप्रभोः साक्षाच्छिष्यवर्य्येण श्रीरूपगोस्वामिमहोदयेन कृतमिदं दूत-काव्यम्। इमं विषयम् अधिकृत्य स्थानान्तरे महती आलोचना मया कृतेति विशेषपर्यालोचनातो विरम्यते। संक्षेपतः किञ्चित् लिख्यते। ग्रन्थोऽयं प्रारभ्यते मधुरया श्रीकृष्णस्तुत्या—

दुकूलं बिभ्राणो दलितहरितालद्युतिहरं
जवापुष्पश्रेणीरुचिरुचिरपादाम्बुजतलः।
तमालश्यामाङ्गो दरहसितलीलाञ्चितमुखः
परानन्दाभोगः स्फुरतु हृदि मे कोऽपि पुरुषः ॥१॥ इति।

उपान्त्यश्लोके (१४१ संख्यके) भागवताग्रगण्यः स्वीयाग्रजः सनातन-गोस्वामिप्रभुवर्य्यश्च "साकर"-इत्युपाधिविशेषविशिष्टतया वर्णितः। संसार-विमुखतया भगवत्प्रेमिकतया भक्तजनसेवकतया च सोऽयं महाजनश्रेष्ठः कविना वैयासकिना तुलितः—

प्रपन्नः प्रेमाणं भगवति सदा भागवतभाक्
पराचीनो जन्मावधि भवरसाद् भक्तिमधुरः।
चिरं कोऽपि श्रीमान् जयति विदितः साकरतया
धुरीणो धीराणामधिधरणि वैयासकिरिव ॥१४१॥ इति।

---

* एतद्विषयकः संदर्भः आङ्गलभाषया मया विरचितः संस्कृतदूतकाव्य-संग्रहस्य सप्तविंशपृष्ठतो द्रष्टव्यः।

अनेन श्रीरूपाग्रजेन श्रीजीवगोस्वामिज्येष्ठतातेन महाप्रभोः प्रेमसम्पर्क-लाभात् प्रागेव रचिता मेघदूतटीका, यस्याः प्रारम्भे करपात्री नन्दनन्दनो वन्दितः। यथा श्रीरूपो वर्णितवान् स्वीयाग्रजम् आजन्मभगवदुपासकं भक्तिप्रेमावतारं व्याकरणादिकुशलं सनातनगोस्वामिप्रवरं तथा सम्भाव्यते, बाल्ये यथैव परिणते वयसि अप्ययं श्रीरूपस्य शिक्षादातासीदिति नास्ति सन्देहः। परन्तु महाप्रभोः श्रीगौराङ्गस्य अनुल्लेखात् सनातनप्रभोः "साकर"—उपाध्युल्लेखाच्च अयं ग्रन्थवर्यः श्रीरूपाग्रजेन महाप्रभोः प्रेमरसास्वादनात् प्राक् एव विरचितः इति नास्ति सन्देहलेशावकाशः।

अत्र शिखरिणीच्छन्दसा निवद्धा द्वाचत्वारिंशदधिकशतश्लोका वर्तन्ते। मध्ययुगीयदूतकाव्येषु इदं वयसा प्राचीनम् इति समालोचका मन्यन्ते। उद्धवसन्देशो यदि अनेनैव कविना रचितः स्यात्तदा नूनं तस्मादनन्तरम् एव हंसदूतं निर्मितं कविना। यतः अत्र हंसदूते कृष्णान्तःपुरवर्णनावसरे ४२-४३श-श्लोकाभ्याम् उद्धवकरे गोपीभिः समर्पि तयोः उद्धवसन्देशप्रसिद्धयोः शारिशुकयोः आलापः समुपनिवद्धः। तथा द्वानवतितमश्लोके कृष्णं प्रति "उद्धवस्तवैव सचिवः, स कथं राधार्थं त्वाम् अनुनये"दिति यद् गोपीवचनं तदपि उद्धवेन सह पूर्वपरिचयमन्तरेण न सम्भवति। तथा गोपीप्रेषित-हंसेनैव कृष्णस्यापि वार्ताप्रेरणसम्भवात् भागवतप्रसिद्धम् उद्धवदौत्यं मा नाम निष्प्रयोजनं भूदिति अलीकस्यापि हंसदूतस्य पश्चाद् विरचनम् उचितम्। उद्धवसन्देशहंसदूतयोः आद्यं प्रसिद्धघटनामवलम्ब्य द्वितीयं कल्पनया कृतवान् कविः। तथा आद्ये नायकेन स्वयं दूतः प्रेषितः, अन्त्ये तु नायिकासख्येति च विशेषः।

इदानीमस्य विषयवस्तु निर्दिश्यते—अक्रूरानुरोधेन नन्दभवनात् श्रीकृष्णे मथुरां गते राधिका सखीभिः सह यमुनातीरं गत्वा तत्र कृष्णविहारसाक्षिभूतं

तत्तत् स्थानादिकं दृष्ट्वा मूर्च्छिता बभूव। मूर्च्छापगमे च तस्याः प्रिया ललिता सखी तां नलिनीदलशय्यायां संस्थाप्य यमुनायां विचरन्तं कञ्चन हंसं दूतं कृत्वा श्रीकृष्णाय प्रेपितवतीति।

तत्र आद्यैः एकादशभिः श्लोकैः [१–११] राधाया विरहावस्था-मूर्च्छा-तदपगमादिवर्णनम्, ललितायाः हंसदर्शनं, राधाया विरहखेदज्ञापनार्थं हंसस्य दूतीकरणं तस्य कृष्णसमीपे प्रेषणञ्च। ततः एकविंशत्या [१२–३२] पथिवर्णनम्। ततो द्वात्रिंशता श्लोकैः [३३–६४] मथुरावर्णनम्, कृष्णस्य मथुराप्रवेशे तत्रत्यनारीणां भावविशेषः, अन्तःपुरवर्णनम्, उद्धवेन सह प्रेषितयोः शारिशुकयोः गोपीवृत्तान्तकथनम्, वार्तानिवेदनावसरकथनञ्च। ततस्त्रिपञ्चाशता श्लोकैः [६५–११७] सन्देशकथनम्। ततो नवश्लोकैः [११८–१२६] भगवदलङ्करणानां वनमाला-मकरकुण्डल-कौस्तुभमणि-पाञ्चजन्यशङ्खानां वर्णनमुखेन स्वानुकूल्यविधानार्थमभ्यर्थनम्। एकादशश्लोकैः [१२७–१३७] दशावतारवर्णनक्रमात् राधापरित्यागकुब्जासखित्वादिप्रकृतवस्तूपन्यासेन कृष्णाक्षेपतदनुनयादिकञ्च। एकेन सन्देशोपसंहारः। द्वाभ्यां [१३९–१४०] पुनर्दूतस्य हंसस्य प्रोत्साहनम्। अन्तिमाभ्याम् [१४१–१४२] आत्मपरिचयकथनपूर्वकं स्वप्रबन्धस्य श्रीकृष्णानन्दजननाशंसेति।

अत्र पथिक्रमश्च इत्थम्—अक्रूररथचक्रचिह्नितेन पथा प्रथमं कदम्बतरुस्थानम्, अत्र कृष्णेन यमुनामज्जनपराणां गोपरमणीनां वस्त्राणि अपहृतानि। ततः कृष्णेन विहरन्तीनां व्रजसीमन्तिनीनां बहुविलाससाक्षिणी रासस्थली। ततो वासन्तीलतावितानमण्डितं कृष्णस्य चतुःशालं सदनम्। ततो लतागृहमनोहरो गोवर्धनशैलः। ततः कदम्बवनवाटी। ततश्चिरशुष्कं पर्वतप्रमाणम् अरिष्टासुरशिरः। ततो भाण्डीरवनम्। ततो

व्रह्ममोहनस्थानम् । ततः कालियह्रदः । ततस्तुलसीभूताया वृन्दादेव्याः स्थानम् । इति ।

अस्य दूतकाव्यस्य लेखपरिपाटीविषये यदि विचारः क्रियते तदा संक्षेपत इदमेव वक्तव्यं यद् उद्धवसन्देशात् नांशतोऽपि हीयते हंसदूत इति । न केवलं न हीयते प्रत्युत उत्कृष्यते एव । यद्यपि आपातदृष्ट्या अनुप्रासादिसद्भावभासुरतया विचित्रवचनभङ्ग्या तरलरसप्रवाहेण च उद्धवसन्देश एव अमन्दम् आनन्दं समानयति मानसस्येति प्रतिभाति, तथापि पर्यन्तपर्यालोचने क्रियमाणे हंसदूतस्यैव भावगाम्भीर्यम् अवश्यम् अङ्गीकार्यं स्यात् । आलोच्यताम् अत्र पृष्ठानुपृष्ठिकया सन्निविष्टानाम् उभयोर्ग्रन्थयोः समस्थलीयपद्यानाम् अनवद्या माधुरी धीरधुरीणैः । एतेन एतयोर्लेखतारतम्यम् एककर्तृकत्वञ्च स्फुटं प्रकटीस्याताम् ।

तत्र हंसदूते ललिता दूतमुखेन राधाया मानवशात् कृष्णेन सह निरन्तर-सम्भोगान्तरायं वर्णयति—

> अहो कष्टं बाल्यादहमिह सखीं दुष्टहृदया
> मुहुर्मानग्रन्थिं सहजसरलां ग्राहितवती ।
> तदारम्भाद् गोपीगणरतिगुरो निर्भरमसौ
> न लेभे लुब्धापि त्वदमलभुजस्तम्भरभसम् ॥११४ इति ।

उद्धवसन्देशे च राधायाः तत्तदवस्थाकल्पनावसरे राधिकोक्तवचनरूपेण श्रीकृष्ण उद्धवमाह :—

> क्वायं गन्ता मधुरिपुरितो गोकुलादस्मदीयः
> काले रंस्ये सुखमिति मया हन्त मानो व्यधायि ।
> का जानीते यदिह खलताचातुरीदीक्षितेन
> निक्षेप्तव्यं शिरसि कुलिशं गान्दिनीनन्दनेन ॥८१॥ इति ।

पात्यतामत्रैव अवसरे उद्धवदूतेऽपि दृष्टिः । तत्रापि राधा कृष्णमुद्दिश्य कथयति—

धैर्यात् काचित् कतिचन सखीशिक्षया लज्जयाऽन्या
भीत्या काचित् कतिचन रुषा काचिदालस्यतोऽपि ।
स्वाधीनेऽपि त्वयि रतिगुरौ केलिकुञ्जावलम्बि-
न्यस्वाध्यायाः कति कति निशा मादृशामत्र नासन् ।।८६।। इति ।

( अत्र 'रतिगुरु' पदस्य हंसदूतोद्धवदूतसाधारण्यमप्यवलोकनीयम् )

राधायाः खेदोक्तिव्यक्तीकरणावसरे च—

अमी कुञ्जाः पूर्वं मम न दधिरे कामपि मुदं
द्रुमालीयं चेतः सखि न कतिशो नन्दितवती ।
इदानीं पश्यैते युगपदुपतापं विदधते
प्रभौ मुक्तापेक्षे भजति न हि को वा विमुखताम् ।।६६

इति हंसदूते ।

आशापाशैः सखि नवनवैः कुर्वती प्राणबन्धं
जात्या भीरुः कति पुनरहं वासराणि क्षयिष्ये ।
एते वृन्दावनविटपिनः स्मारयन्तो विलासान्
उत्फुल्लास्तान् मम किल बलान्मर्म निर्मूलयन्ति ॥८३

इति च उद्धवसन्देशे । ( आलोच्यताम् अत्रैव अवकाशे उभयोर्लेखगाम्भीर्य-तारतम्यम् अपि )। तथा—

रणद्भृङ्गश्रेणीसुहृदि शरदारम्भमधुरे
वनान्ते चान्द्रीभिः किरणलहरीभिर्धवलिते ।
कदा प्रेमोद्दण्डस्मरकलहवैतण्डिकमहं
करिष्ये गोविन्दं निविडभुजबन्धप्रणयिनम् ।।१०२

इति हंसदूते राधिकोक्तिः,

> प्रेमोत्साहात्सहनविवहन् बाष्पधारात्मकाण्डे
> गण्डोत्सङ्गे स्मरपरिभवैः पाण्डुरे दत्तचुम्बः ।
> कुर्वन् कण्ठग्रहविलसितं नन्दयिष्यामि सत्यं
> सान्द्रेण त्वां सहचरि परिष्वङ्गरङ्गोत्सवेन ॥१२७

इति च सन्देशे श्रीकृष्णोक्तिः । वस्तुतस्तु एतयोः ग्रन्थयोः गुणागुणविचारः सर्वथा दुष्कर इति प्रतिभाति । यच्च क्वचित् किञ्चिद् लेखवैषम्यं तदपि भूयसा छन्दोभेदकृतम् इत्यस्माकं मतिः ।

समानैककर्तृकतायां ते ते समुद्धृताः श्लोका एव यद्यपि पर्याप्ताः, तथापि स्थूणानिखननन्यायेन अन्यदपि उपन्यस्यते उभयोः साम्यम् । तच्च स्वप्रबन्धस्य भगवदर्पणशंसकयोः श्लोकयोः । यथा—

> रसानामाधारैरपरिचितदोषैः सहृदयै-
> र्मुरारातिक्रीडानिविडघटनारूपसहितः ।
> प्रबन्धोऽयं बन्धोरखिलजगतां तस्य सरसां
> प्रभोरन्तः सान्द्रां प्रमदलहरीं पल्लवयतु ॥१४२

इति हंसदूते । अत्र तस्य इति कवेरित्यर्थः, एतच्च पूर्वश्लोकान्वयि ।

> गोष्ठीक्रीडोल्लसितमनसो निर्व्यलीकानुरागात्
> कुर्वाणस्य प्रथितमधुरामण्डले ताण्डवानि ।
> सूर्यारूपाश्रयपदसरोजन्मनः स्वामिनोऽयं
> तस्योद्दामं वहतु हृदयानन्दपूरं प्रबन्धः ॥१३०

इति चोद्धवसंदेशे । अत्र प्रायेण सर्वेषामेव पदानां साम्यं वर्तते, यावद् नामैकदेश 'रूप' पदस्यापीति ।

इदानीमस्य भक्तिमाधुर्यं सहृदयहृदयावर्जकं किञ्चिदुल्लिख्य प्रबन्धोप-संहारमिच्छामः।

भक्तोत्तमलिखितोऽयं बङ्गीयो दूतग्रन्थः सर्वथा भक्तिमाहात्म्यविमण्डित एव। आत्मानं सर्वथा नारीं मन्यमान इव कविः यदा गोपीमुखतो वदति—

न निर्वक्तुं दामोदरपदकनिष्ठाङ्गुलि-नख-
द्युतीनां लावण्यं भवति चतुरास्योऽपि चतुरः।
तथापि स्त्रीप्रज्ञासुलभतरलत्वादहमसौ
प्रवृत्ता तन्मूर्तिस्तवरतिमहासाहसरसे ॥५३॥

इति, तदेव विज्ञायते कियद् गभीरा भक्तस्य कवेर्भगवद्विषया रतिरिति। अहो मधुरिममयी वर्णना विरहिण्याः श्रीराधिकायाः :—

तरङ्गैः कुर्वाणा शमनभगिनीलाघवमसौ
नदीं काञ्चिद् गोष्ठे नयनजलपूरैरजनयत्।
इतीवास्या द्वेषादभिमतदशाप्रार्थनमयीं
मुरारे विज्ञप्तिं निशमयति मानी न शमनः ॥७६॥ इति।

श्रीकृष्णविरहात् श्रीमत्या अश्रुभिः सृष्टा नवीना नदी यमुनाया अपि बृहत्तरा जाता इत्यहो कृष्णप्रीतिः श्रीराधिकायाः। अहो कष्टम् एवम् अनारतं रुदत्यपि श्रीराधा न स्वाभिप्रेतं मृत्युं भजते इति।

राधासखी ललिता श्रीराधिकामेव तिरस्करोति अस्यै अकारणात्माव-माननायै। कोऽसौ कृष्णः यदर्थम् ईदृशं दुःखं राधा भजेत्—"निज-दोषात् परमसौ ययौ मन्दा वृन्दावनकुमुदबन्धो विधुरताम्" (७८)। सर्वथा प्रेमपरतन्त्रा श्रीराधा तमालरसेन श्रीकृष्णं भूमौ विलिख्य

साक्षात्कृष्णमिव आलिङ्गति ( ८४ ), निरन्तरकृष्णभावनया सा राधिकाऽपि कृष्णत्वं प्राप्ता ( ८५ )। परन्तु कृष्णं प्रति प्रेषितः सन्देशः कीदृशः स्यादिति चिन्तयन्त्यपि सा यदा नालन्नासीन्निश्चेतुं तदा कादम्बरीव वदति—

गरीयान् मे प्रेमा त्वयि परमिति स्नेहलघुता
न जीविष्यामीति प्रणयगरिमख्यापनविधिः।
कथं नायासीति स्मरणपरिपाटीप्रकटनं
हरौ सन्देशाय प्रियसखि न मे वागवसरः ॥१०० इति।

अर्थान्तरन्यास ( ८, ६३, १२३, १२५ )—काव्यलिङ्ग ( १६ )—अपह्नुति ( ६७ )—प्रभृत्यलङ्कारैः समलङ्कृतोऽयं दूतग्रन्थः। अस्य ग्रन्थस्य टीकाद्वयी वर्तते, एका गोपालचक्रवर्तिकृता अन्या च मधुमिश्ररचिता, ते चाद्यापि न प्रकाशिते इति दूयते अस्माकं हृदयम् इति।

---

रुद्रन्यायवाचस्पतिकृतं

## भ्रमरदूतम् (१)

रुद्रन्यायवाचस्पतिकृतं भ्रमरदूतं दूतकाव्येषु अन्यतमम्। खीष्टीये १६४० अब्दे एसियाटिक-सोसाइटीत्याख्य-संस्थायाः एकमात्रलब्धात् ५२०८ संख्यकात् हस्तलिखितपुस्तकात् संशोध्य मया एतत् प्रकाशं नीतमासीत्। अस्य हस्तलिखितपुस्तकस्य विवरणं तस्मिन्नेव पुस्तके भूमिकाया एकादश-पृष्ठे द्रष्टव्यम्।

काव्यस्यास्य आरम्भ इत्थं कविना कृतः—रामो माल्यवत्पर्वताद् हनूमन्तं दूतं विधाय रावणहृताया अशोकवनवासिन्याः सीतायाः समीपं प्रेषयामास। तस्यागमनम् अपेक्षमाणश्च अधीराधीरः कालं यापयन् वर्तते स्म। कालेऽस्मिन् सीतायाः सकाशात् अभिज्ञानमणिम् आदाय हनूमान् प्राप्तः। तं मणिम् अवलोक्य पुनर्नवीभूतप्रियतमाविरहः शोक-सन्तप्त आसीद् रामभद्रः। धैर्येण स्थैर्यम् अवलम्ब्य हनूमन्तं विश्रामाय आदिष्टवान् श्रीरामचन्द्रः।

गते हनूमति सीतागतमानसः स पर्वतनिकुञ्जे भ्रमन् कञ्चन मधुकरं लोचनातिथिं चकार। 'हनूमतापि दूतेन यन्न हारितं तथाविधं किञ्चन मनोगतं सीतायै प्रेषयितुं रामस्तं भ्रमरं दूतं चकार इति।

(१) डक्टर श्रीयतीन्द्रविमलचतुर्धुरीणेन संस्कृतदूतकाव्यसंग्रहस्य प्रथम-ग्रन्थरूपेण प्राथम्येन संशोध्य सुविस्तृतया भूमिकया अनुक्रमणीप्रभृतिभिश्च सह प्रकाशं नीतम्; कलिकाता—१६४०। प्राप्तिस्थानम्—प्राच्यवाणी-मन्दिरम्, ३ फेडारेशान ष्ट्रीट्, कलिकाता-६।

अत्र इदम् एव तावत् कविः प्रथमतः प्रष्टव्यो भवति । यत्, सद्य एव सीतासकाशात् साभिज्ञानं सन्देशम् आदाय श्रीमान् हनूमान् समागतः । ननु किं पुनरयम् अयोग्योऽपि भ्रमरो दूतः कारितः श्रीरामेण ? कः स सन्देशः यो ग्रहणधारणपटीयसि आत्मन एकनिष्ठे अपि सेवके हनूमति भगवता रामेण न निधातुं पारितः ?

अस्य किमपि उत्तरम् अस्माद् ग्रन्थात् अस्माभिर्नोपलभ्यते । स्वमनीषा तु एवम्—रहस्यं वस्तु समानजातीये जने प्रकाशयितुं स्वत एव लज्जते लोकः, न त्वसमानजातीये । अत एव तिर्यञ्च इव मनुष्येभ्यः मानवा अपि तिर्यग्भ्यः न लज्जन्ते । यदुक्तं श्रीहर्षेण—
"जिह्रेति यन्नैव कुतोऽपि तिर्यक् कश्चित् तिरश्चस्त्रपते न तेन ।" इति ।
अत्र ग्रहणधारणपटीयस्त्वरूपधर्मेण रामसजातीयो हनूमान्, तद्वैलक्षण्याद् भ्रमरो न तथेति युक्तम् उत्प्रेक्षिता तस्य दूतता रामेण । अत एव दृश्यन्ते प्रायेण अनिन्द्रिया अनिपुणेन्द्रियाश्च दूता दूतकाव्येषु । मेघादीनां दूततायां च सन्त्स्वपि युक्त्यन्तरेषु एषापि युक्तिः कवेर्मनसि नासीद् इति न सुदृढं वक्तुं शक्यते ।

अथ तर्हि कथम् आदौ हनूमान् दौत्ये वृतः ? इति न देश्यम् । तदानीं केवलं कुशलसन्देशस्यैव देयत्वादेयतया प्रागुक्तानुपपत्तेः अनवतारात् । किञ्च, तदानीं गन्तव्यदेशस्याऽपि सम्यक् अनिर्णयात् तथाविधम् अलौकिकप्रभावं दूतं विना कार्यस्यापि निष्पत्तिर्न भवेदिति ।

## काव्योत्कर्षः

इदानीम् अस्य काव्यं पर्यालोचयामः । अत्र तावत् प्रथमया पञ्च-श्लोक्या [१–५] अशोकवनाद् हनूमदागमनादि वर्णितम् । ततो नवश्लोक्या [६–१४] रामस्य विरहावस्था, भ्रमरदर्शनं स्वागतसम्भाषणादिपुरःसरं दौत्य-

कर्मकरणाय भ्रमरस्य निमन्त्रणञ्च । तदनन्तरम् एकसप्तत्या श्लोकैः [१४–८४] मार्गनिर्देशः । ततो द्वादशभिः श्लोकैः [८५–९६] विरहिण्याः सीतायाः सम्भावित-तात्कालिकावस्थावर्णनम् । ततः ऊनविंशत्या [९८–१२६] सन्देशवर्णनम् । एकेनोपसंहारः । अन्तिमाभ्यां पुनः कविपरिचय इति समष्ट्या सपादशतश्लोक [१२९] मयमिदं काव्यमिति ।

अत्र यद्यपि मेघदूत-पवनदूतादाविव दूतप्रेषणकालः कण्ठतो नोक्तः, तथापि पर्यालोचनया वर्षास्वेव दूतः प्रेषित इति प्रतीयते । तथाहि भ्रमरस्य स्वागतभाषणावसरे—

> कच्चिद् भ्रातर्भ्रमर भवता शीलितो मालतीनां
> सीधुः कच्चित् कुसुमितशिखाः सेविता वा कदम्बाः ।
> नीताः कच्चित् कथमपि सखे वासरा वारिवाह-
> व्यूहच्छन्ने नभसि निभृतं यूथिकावीथिकासु ॥८

इति ; तथा—

> मर्मग्रन्थिः स्फुटति बहुशो येषु वः कण्टकाग्रै-
> र्धूलीजालैः झटिति च दृशोरायुरन्तं प्रयाति ।
> कच्चित् प्रौढानिलपरिचयाद्विच्युतो यूथिकायाः
> संसक्तोऽभूर्न बत विधिना तेषु किंशुकेषु ॥१०

इति च वार्षिकम् एव वस्तुजातं प्रस्तुतम् । एवं सन्देशप्रेषणावसरे च—

> मेघश्यामाः स्फुरिततडितो यामिनीर्या निनेषात्
> पूर्वं रामो गृहिणि गहने त्वनुसनाथो निनाय ।
> ता एवाद्य प्रलयजलदध्वानधारागभीराः
> कल्पायन्ते कमलवदने दीर्घयामा रजन्यः ॥११५

इत्यादिश्लोकेन स्पष्टम् एव वर्षतुरेव दूतप्रेषणकाल इति सूच्यते ।

यद्यपि वर्षासु रजन्यो दीर्घयामा न भवन्ति तथापि विरहवशात् तद्वत् प्रतीयमाना इत्यर्थे पर्यवसानं कल्पनीयम्। एवं "नृत्यल्लीला-शिखिनि" [११७] इत्यादि, "यस्योद्भिन्नम्" [१२०] इत्यादि, "हत्वा नक्तञ्चरपुरपतिं" [१२२] इत्यादिश्लोकाश्चात्र द्रष्टव्याः।

वर्त्मनिर्देशश्चित्रकूटपर्वतं कूटीकृत्य कृतः। वर्त्म च संक्षिप्तमेव कृतं कविना। तथा च चित्रकूटाद् विन्ध्याचलपरिसरवर्तिनी रेवा, रेवा-मुत्तीर्य कार्णाटराज्यं, ततः कावेरी, ततः शिवकाञ्ची, ततो विष्णुकाञ्ची, ततः सागरस्ततश्च तत्तीरवर्तिनी लङ्केति संक्षेपः। एतानि च स्थलानि किं मार्गविधया समुपस्थापितानि किंवा द्रष्टव्यविधयेति संशयः पदं करोति, यतः कविना मार्गनिर्देशप्रसङ्गे मुखत एवोक्तम्—

द्रष्टुं देशानतिशयगुरूंश्श्रोत्रनेत्राभिरामान्
न त्वं भ्रातर्भ्रमर गणयेरध्वनो जिह्मभावम्।
आसन्नक्षणोः क्षणमतिथयो यस्य ते ते न देशाः
सृष्टा दृष्टिः सुभग विधिना तस्य मन्ये मुधैव ॥१७ इति।

परं माल्यवत्पर्यंता राजन्ते औरङ्गावादाख्यमण्डल्याम्। तत आरभ्य भ्रमरेण उत्तरस्यां दिशि बहोदूराद् नर्मदातीरपर्यन्तं गन्तव्यमिति द्रष्टव्यविधया एव कविना तानि स्वीकृतानीति कुतः सन्देहः। भूयोऽपि दृश्यते कावेरीनदीतः 'कोञ्जीवेरं'पर्यन्तगमनरूपोत्तरदिग्विभागविहारः केवलं द्रष्टव्यदर्शनविधयैव युज्यते। एतादृशो मार्गपरिक्रमो मेघदूतेऽपि। किन्तु अत्र अस्माभिः सकौतूहलम् इदं लक्षीक्रियते यत् भ्रमरदूतवर्णितो मार्गपरिक्रमो रामायणप्रोक्तमार्गात् भिन्न एव। श्रीरामचन्द्रस्वीकृतमार्ग-परि-

चयार्थं पार्जिटारमहोदयलिखितः "The Geography of Rama's Exile" प्रबन्धो द्रष्टव्यः।(१)।

तत्र पथि वर्णनीयाः प्रायेण युवत्य एव। क्वचिच्च नद्यादिवर्णनायां मन्दमारुतः पर्वतादिवर्णनायाञ्च कुटजकुसुमादि वर्ण्यतया दृश्यते। शिवकाञ्च्यां पुनः

धूपैः कालागुरुदहनजैर्धूपितं धूर्जटेस्त्वं
पुष्पैरुच्चनुसरिमलभरैर्वासितं वेश्म यायाः।
कण्ठेकालं कलितभुजगाभोगभव्यावतंसं
ज्योतिः पश्येः परिणतशरच्चन्द्ररश्मिप्रकाशम् ॥६०

इत्यादिना भगवन्तं महादेवम्,
विष्णुकाञ्च्यामपि—

तस्यां किञ्चित्तरुणतिमिराकारमालोकयेस्त्वं
ज्योतीरूपं परिणमति यद् योगिनां मानसेषु।
ध्यायन्तो यत् क्वचन विपिने कन्दरे भूधराणां
मुक्तात्मानस्तृणमिव जगन्नीरधिं निस्तरन्ति ॥२०

इत्यादिना भगवन्तं विष्णुं चास्तौत् कविः। विस्मयश्चैष यद् मार्गनिर्देश-प्रसङ्गेन व्यचितानां श्लोकानां (एकसप्ततेः) प्रायेणार्धं काञ्च्याम् एव विनियुक्तं कविना। अपरम् अर्धं च सर्वेषु पथिषु इति।

सन्देशवर्णने च—प्रायेण आदित आन्तं यावद् रावणकर्तृकसीता-हरणात् अनन्तरं प्रवृत्ता घटनावली कविना उपन्यस्ता। तत्रापि, कनकमृगं

(1) Journal of the Royal Asiatic Society, 1874, pp. 256-257.

हत्वा प्रत्यागच्छतो रामचन्द्रस्य पथि नानाविधाशुभशकुनदर्शन-वर्णनम्, ततश्च सीताविरहेण आश्रमतरुलतादीनां पशुपक्ष्यादीनां च दुरवस्थावर्णनम्, मध्यतश्च श्लोकचतुष्टयेन रामस्य आत्मानुशोचनवर्णनं कान्तान्वेषणवर्णनञ्च। उपसंहारश्लोकेन तु मेघदूतरीत्या भ्रमरस्य प्रियया सह चिरवियोगाशंसनम् इत्येव काव्यम्।

काव्येऽस्मिन् सत्यपि अनुकरणादिविविधदोषान्तरे लेखस्य अनन्य-साधारणं सारल्यं सहृदयानाकर्षेदेव। अत्र च प्रागुल्लिखिताः श्लोकाः सादरम् आवेदयन्ति। कोमलपदविन्यासकौशलं पदानां योजननैपुण्यं च सुशिक्षितं कवेरिति को वा संशयः। अलङ्कारपर्यालोचनया पुनः एकम् अर्थान्तरन्यासं कियतीः उत्प्रेक्षोपमाश्च विना नापरः कश्चित् स्फुटोऽलङ्कारः परिज्ञायते।

कविरयं भाषापरिच्छेदकर्तुः विश्वनाथन्यायपञ्चाननस्य ज्येष्ठः सहोदरः, विद्यावागीशस्य पुत्रश्च। एतत्कवेर्विशेषपरिचयः पश्चाद्वर्तिनः अंशांशाद् अवगन्तव्यः।

---

रुद्रन्यायपञ्चानन-कृतं

## पिकदूतम्

अमरदूतकर्तु रेव अपरं काव्यं पिकदूतं नाम। अत्र च श्रीकृष्णे मथुरां गते विरहिणी राधा पिकं दूतीकृत्य कृष्णसमीपे प्रेषयामासेति स्थूलं वस्तु। अन्यदूते नायको नायिकासमीपे दूतं प्रेषयामास, अत्र पुनः नायिका नायकसमीपे इति विशेषः। अपि च परिदर्शितक्रमो दूतकाव्यस्य मार्गानुसारः अपि अत्र पालितः। केवलं सन्देशात्मकम् इदं दूतकाव्यम्। अस्यञ्च संक्षेपः—

श्रीकृष्णे मथुरां गते तद्विरहकातरा राधा वृन्दावनकुञ्जे यत्रैव भ्रमन्ती पिकम् एकं ददर्श। दृष्ट्वा च तं दौत्यं कर्तुम् अनुनयन्ती प्राह—हे पिक, त्वं सर्वजनप्रिय इति कृत्वा त्वां दौत्यं कर्तुं याचे। दौत्यनिपुणोऽपि भ्रमरो न तत्र प्रेषणीयः, यतो मधुपः स कृष्णपदारविन्दमधुलोभेन व्यासक्तः मथुरातो वृन्दावनं नागच्छेदेव। प्राक् प्रेषितं मम मनस्तु कृष्णपदे लग्नं ततो नागच्छति, अतः त्वां विना कम् अन्यं दूतं कुर्याम्। अथ यदि गन्तुं पथिश्रमं तर्कयेः तदा अस्माकं चित्तमतङ्गजं वा मनोरथं वा रथं समारुह्य अनायासेन गच्छेः। एवञ्च तव कृष्णदर्शनं गोपीनां च विरहार्णवात् निस्तार इति युगपत् फलद्वयं भविता। स त्वम् इतः प्रस्थाय मथुरां गत्वा अवसरे कृष्णम् अस्मदवस्थां ज्ञापयेः। अस्माभिः, यशोदया नन्देन वा अक्रूरस्य किम् अपराद्धं येन स कृष्णम् इतो नीतवान्। त्वं कृष्णम् एवं ब्रूयाः—हे माधव, तव विरहविषधरदष्टा राधा माम् इह प्रेषयन्ती एतावन्तं कालं जीविता वर्तते न वेति न जाने। परं तर्कयामि यत् मत्प्रत्यागमनपर्यन्तं त्वद्दर्शनाकाङ्क्षिणी सा जीवितैव तिष्ठेत्, मयि गते तु

यथाकर्तव्यं करिष्यति। हे कृष्ण, यां त्वं तत्तद्विपत्सागरात् समुद्धृत-वान्, या च त्वदर्थं जीवनं यौवनं कुलं मानं पत्यादिपरिजनं च न चिन्तितवती तां राधां कस्मै वितीर्य सुस्थः सन् अत्र वर्तसे? अत्र यद्यपि सर्वा एव गोपरमण्यो विरहग्रसितमा वर्तन्ते, सर्वा एव च सर्वदा कृष्णं गायन्त्यो विलपन्ति तथापि किमर्थं जना मान् एव कृष्णविरहिणीं वदन्तीति न जाने। कृष्णार्थम् इतः पूर्वं बहुकलङ्को मया सोढः; परं कृष्णो राधां परित्यज्य मथुरां गत इत्यपवादस्तु दुःसहो जातः। हे पिक, एतत् सर्वं त्वं कृष्णसमीपे वक्ष्यसि। किन्तु, कृष्णविरहे वृन्दावने वृक्षा न पुष्यन्ति, बर्हिणो न नृत्यन्ति, भ्रमरा न गायन्ति इत्यादि न वक्तव्यम्। किञ्च अत्र शीतांशुः सहस्रकिरणायते, वायुर्वह्नीयते, यमुना च वैतरणीयते इत्याद्यपि न वाच्यमेव इति।

### पिक-भ्रमरदूतयोः पौर्वापर्यविवेचनम्

अनयोश्च पिकभ्रमरदूतयोः कतमत् कवेः आद्या कृतिरिति प्रश्ने पिक-दूतम् एवेति अस्माकं उत्तरम्। अत्र च कारणम् एकम् एव, तच्च लेखस्य पटुत्वापटुत्वे। भ्रमरदूतस्य लेखो यथा सरसः स्वच्छन्दगतिश्च न तथा पिकदूतस्य। पिकदूते लेखः स्खलितगतिः कष्टसृष्टश्च। परिपक्वलेखता च क्रमेण परिणतायामेव बुद्धौ भवति। केचिदाहुः छन्दोवैलक्षण्यादेव लेखस्य गतितारतम्यं न स्वतः, ततश्च मेघदूतप्रसिद्धेन मन्दाक्रान्ताच्छन्दसा निबद्धा भ्रमरदूतश्लोका यथा गतिमन्तः प्रतीयन्ते न तथा शार्दूलविक्रीडित-च्छन्दोबद्धाः पिकदूतश्लोका इति, न लेखगत्या पौर्वापर्यनिर्णयः कर्तुं युक्तः इति। एतदपि न विचारसहम्। अपटुच्छन्दोनिर्वाचनमपि अपरिणत-प्रज्ञताम् एव सूचयति इत्यतोऽपि पिकदूतम् एव ज्येष्ठं भवति।

अन्ये पुनरेवं कथयन्ति,—कविना

तिष्ठन्त्येव हि दौत्यकर्मनिरता अन्ये द्विरेफादयः
किन्त्वस्माभिरिमे हरेर्निकटतो न प्रेषणीयाः क्वचित् ।
ते यस्मान्मधुलोभिनो मधुरिपोः प्राप्याङ्घ्रिपद्मं ननो
नो चेत्तन्मधुलोभतो मधुपुरादायास्युरस्मिन् पुनः ॥५

इत्यादिना भ्रमरस्य दूततायां वितृष्णा आविष्कृता । यदि भ्रमरदूतं पश्चात् कृतं भवेत् तदा कथम् आविष्कृतवितृष्णं भ्रमरम् एव तत्र दूतं कुर्यात् ? अतो भ्रमरदूतम् एव ज्येष्ठम् । तत्र कृष्णदौत्यपरिचितो भ्रमरः कथं नात्रापि दूतः कृत इत्यनुयोगस्य अवसरानुगुणम् उत्तरम् एव अनेन श्लोकेन कविना दत्तम् इति । एतदपि न मनोरमम् । भ्रमरे वितृष्णा च कवेर्न स्वाभाविकी, किन्तु कार्यवशाद् एव । कार्यं च मधुलोभः । स यथा प्रकृत-काव्ये दौत्यविधौ प्रत्यूहभूतः न तथा भ्रमरदूते । तथाहि, अत्र मधुलोभ-पदस्यार्थो व्यञ्जनया भगवच्चरणासक्तिः, स च प्रकृतदूते चमत्कारातिशयम् एवाकूजत् । भ्रमरदूते पुनः तथाविधोऽर्थो निबध्यमानः सभ्यानां जुगुप्सां जनयन् सर्वमेव काव्यं व्याकुलीकुर्यादिति पश्चादपि क्रियमाणा भ्रमरस्य दूतता न विरुद्धा न वा रसविहन्त्रीति कृतं पल्लवितेन ।

अत्रापि दूतप्रेषणस्य कालः कण्ठतोऽनुक्तोऽपि पिकस्य दूतस्य साहचर्याद् वसन्त एवेति बोद्धव्यम्, कालान्तरे पिकस्थित्यसम्भवात् । सम्भवन्त्याम् अपि स्थितौ तेषां मूकतया कण्ठाश्रवणप्रसङ्गात् । कविना च प्रथमश्लोके—

'शुश्रावेन्दुमुखी वनप्रियरवं राधा कुरङ्गेक्षणा'

इत्यादिना रवश्रवणोपन्यासः कृत इति ।

छन्दश्चात्र शार्दूलविक्रीडितम् इति प्रसङ्गात् पूर्वम् अपि उक्तम् । अत्र छन्दोनिर्वाचने तुलसीदूतादिकम् अस्य पथिप्रदर्शकम् इति तर्कयामः ।

एकत्रिंशच्छ्लोकात्मकमिदं काव्यम् असम्पूर्णम् इति प्रतिभाति । भ्रमर-दूत इव दूतस्येष्टाशंसनादिरूप उपसंहारः कविपरिचयादिकं च नात्रोप-लभ्येते इति ।

---

श्रीकृष्णसार्वभौम-विरचितं

## पदाङ्कदूतम्

महामहोपाध्याय-श्रीकृष्णसार्वभौमविरचितम् इदं काव्यं पञ्चचत्वारिंशता श्लोकैः समाप्तिं गतम्। अस्येयं वस्तुवर्णना—

सर्वविरहकातरा कापि गोपसुन्दरी श्रीकृष्णं यमुनातीरवर्तिनि कुञ्जे गतं मन्वाना झटिति तत्र जगाम। किन्तु तत्र कृष्णम् अप्राप्य मूर्च्छां प्राप। मूर्च्छापगमे च तत्र श्रीकृष्णपदचिह्नं दृष्ट्वा तदेव दूतं कृत्वा मथुरायां कृष्णसमीपे प्रेषयामास इति। पदाङ्क एव दूतं यस्मिन् काव्ये तत् पदाङ्कदूतकाव्यम् इति नाम्ना एव अस्य ग्रन्थस्य विषयवस्तु परिज्ञायते।

विना अन्तिमश्लोकं ग्रन्थेऽस्मिन् सर्वत्र मन्दाक्रान्ता छन्दः। अन्तिमश्लोके तु शार्दूलविक्रीडितम्। रसः करुणविप्रलम्भः, रीतिर्वैदर्भी, नायिका विरहोत्कण्ठितेति। काव्यमिदं भक्तिविषयकम्। स्वहृदयवर्तिन्या अनवद्याया भक्तेः भगवच्चरणे समर्पणमुद्दिश्य कविना काव्यमिदं लिखितम् इति स्पष्टमेव। कविः नव्यन्यायपारङ्गम इति तस्य लेखत एव सुस्पष्टम् अस्ति (७, २१, ३१–३२, ४२–४३)। तस्य रचनायां न्यायदर्शनस्य मङ्गलतरुः भक्तिसुरधुन्याः कूले सर्वत्र परिदृश्यमानो वर्तते। तेन च अत्र उभयोरेव मङ्गलमयं सौन्दर्यं स्फुटतरम् आविर्भूतमस्ति।

पदाङ्कदूतं वा कृष्णपदाङ्कदूतं वा इदं काव्यं कवेरत्यन्तं लोभनीयं मोहनीयं च वस्तु। कल्पनाचातुर्याः साहाय्येन कविः स्वहृदयस्यानवद्यं भावं प्रकाशीकृतवान् चतुर्थे पद्ये। तथा च

रम्यं यावन्मुरहरपदे शोभने तावदेव
त्वय्यन्याते कुलिश-कमल-स्यन्दनाङ्कादिचिह्नम् ।
गोपीवृन्दैरयमकटनाब्धिः सख्ये पङ्कजाक्षे-
[illegible] धीरत्वमुच्च हृदये सुहृदो नो गृहीतः ॥१४

इति पदाङ्कस्य दूतत्वे नियोजने [illegible] हृद्यं विघ्नं कविना गोपीमुखेन— [illegible] सर्वथा [illegible] कृष्णान्तिके [illegible] तु श्रीकृष्णस्य [illegible] स्थैर्यमाविष्कृतम् । आकाङ्क्षा [illegible] । [illegible] गोप- [illegible] कृष्ण- [illegible] न तु विस्मृतिः कार्येति कविः सदुक्तिकं प्रतिपादयति १६-अनचत्वारिंशत्तमे श्लोके, कृष्णध्यानाद् यथा सुखं भवति स्वर्गलोके वा ब्रह्मसन्दर्शने वा तादृशं सुखं नोत्पद्यते इति नारदेन देवर्षिणा कथितम् ; तत्र पदाङ्कस्य ते केवलं अलसा बुद्धिर्यत् तादृशजनकस्य दर्शने वीतचेष्टो वर्तसे इति । चत्वारिंशत्तमश्लोके च कविहृदयस्य भीतिः पदाङ्कस्य प्रदत्तो दिव्यं ज्योतिः अपरिसीमां शोभां पवित्रताञ्च । गोप्य आहुः—कृष्णसमीपे अस्माकं दुःखनिवेदनावसरे पदाङ्केन स्वदेहो गोपयितव्यः ; अन्यथा दीर्घकालात् परं पितापुत्रयोर्दर्शने सञ्जाते उज्ज्वलदेहं पुत्रं प्रति निबद्धनिर्निमेषदृष्टेः पितुर्मनः तत्कथायां लग्नं न भवतीति हितेप्सुना पदाङ्केन स्वदेहं गोपयित्वैव अस्मद्वार्ता निवेदयितव्या ।

श्रीकृष्णस्य पदचिह्नं कृष्णाद् एव जातं तस्यैव दिव्यविभूतिसम्पन्नञ्च, स्वत एव तद् गोपीनां भक्तिपात्रम् । भक्तिविमण्डितः कविः एवंविधान्यन्यान्यपि चिह्नानि स्वहृदयान्निःशेषमुच्चित्य १७शश्लोके वर्णयति—

श्रीकृष्णचरणोत्पन्नमेकं चिह्नं कालियसर्पशिरसि शोभमानं तस्य गरुड-भीतिम् अशमयत्। अन्यच्च गयासुरशिरोभागे स्थितं पिण्डद्वारा भवसागरे तरिरिव वर्तते। अस्मद्दृष्टम् एतदपि पदचिह्नं तादृशमेव—महतां जन्म जगतामुपकारायैव भवति इति।

कालिदासीये मेघदूते बलाका मेघस्य सहाया आसन्, अत्र पुनर्वायुरेव पदाङ्कस्य सहायो विहितः। तत्राह—हे पदाङ्क, पद्मसुरभिः यमुनाशीकर-सम्पृक्तो वायुः मयूरपिच्छं सञ्चालयन् स्वेच्छया ते सहगामी भविष्यति इति। एकोपक्रमेण अनेकदूरगमनमपि दुःखाकरमिति मत्वा पुनराह—हे पदाङ्क, एकैकं क्रोशम् अतिक्रामता त्वया यमुनायां पादौ प्रक्षाल्य सुशीतलवृक्ष-च्छायायां क्षणं विश्रामः कर्तव्यः। न च वक्तव्यमपादस्य मे कुतः पादधावनचिन्तेति ; यः श्रीकृष्णपदाङ्कः (ब्रह्मलोकादि) उत्कृष्टं पदं ददाति स स्वयं पदहीन इति प्रत्ययः कूर्मलोमप्रत्ययवदसत्य एव—

> "उत्कृष्टं यज्जनयति पदं सेवकानां जनानां
> पद्भ्यां हीनं तदिति जगतां प्रत्ययः कूर्मलोम ॥"२६

गच्छतः पदाङ्कस्य वाहनकार्यं करिष्यति गोपीनां मनोऽश्वः। सजल-जलधरच्छायया सूर्यातपो निवारितो भविष्यति। पद्मबन्धुः सूर्यः पदाङ्क-स्थितस्य कमलस्य ग्लानिभिया वर्षणं प्रतिरोत्स्यतीति तु स्थितमेव (श्लोकः—२७)।

ग्रन्थापेक्षया पदाङ्कमुखेन प्रेरिताया गोपीनां विरहवार्ताया आनुपातिकी क्षुद्रता वर्तते। भाषा चैतदंशस्य दार्शनिकपरिभाषाबहुला। संक्षेपतः प्रेरिता वाणी चेयम्—श्रीकृष्णः मथुरायां कुब्जाप्रेममुग्धः मञ्जुकुञ्जं वृन्दावनं विस्मृतवानिति—

"वृन्दारण्यं स्मरसि न कथं श्रीपते मञ्जुकुञ्जं
ज्ञातं ज्ञातं यदिह न परीरम्भणं कुब्जिकायाः ॥"४१

पदाङ्कस्य दौत्यकर्मणः सफलता तावत् तदीयवचनविन्यासायत्तं वर्तते। वक्तुर्वाक्येन तथा भवितव्यं यथा तेन श्रोतुरनायासेन अर्थावगतिर्भवेत्। कतिपयधर्मैर्विशिष्टः शब्दसन्तान एव तादृशं वाक्यम्, तदेव च प्रमाणं नेतरत्। तेषु च विशेषधर्मेष्वाकाङ्क्षा अन्यतमा। अन्यधर्मैरिव आकाङ्क्षाधर्मेणापि विरहितं वाक्यं न प्रमाणपदवीमारोहति। अपरतः पुनः मनोधर्मोऽपि काचिदाकाङ्क्षा वर्तते, सा च वासनापरनामा, साऽपि वाक्योपयोगिनी ; एवञ्च यथा शब्दधर्मरूपाया आकाङ्क्षाया अभावात् पदाङ्कोक्तं वाक्यम् अप्रमाणमिति कृत्वा कृष्णेन तत्र गौरवं नारोप्येत ; एवमेव गोपीनामभिलाषरूपा आकाङ्क्षा दूतवाक्ये अप्रकटिता चेद् दौत्यं व्यर्थं विदध्यादेवेति। कविरयं पद्येऽस्मिन् श्लिष्टम् आकाङ्क्षापदम् उपस्थाप्य दूतं पदाङ्कं सावधानीकुर्वन्नाह—तव वाक्ये संस्कारदोषः कश्चन यथा न तिष्ठेत् यथा च अस्माकं वक्तव्यं सुपरिष्फुटं भवेत् तथा त्वया कर्तव्यम्, एतेन च श्रीकृष्णः अस्माकम् अभिलाषमभिज्ञाय यथाकर्तव्यं कर्तुं शक्नुयात्—

"आकाङ्क्षा या ग्लपयति मनो मादृशां वासना सा
शाब्दे धर्मे सति न भविता हानिरेव क्रमाङ्क।
साकाङ्क्षोक्त्या मुरहरपदे सर्वमेतन्निवेद्यं
नो चेत्तस्य प्रमितिजनने केन हेतुस्तवोक्तिः ॥"४२ इति

बौद्धाः सर्वं भावात्मकं वस्तु क्षणिकमाहुः, तत् कथम् अवितथं भवेत् ? यतो गोपाङ्गनानां कृष्णविरहज्वाला चिरविराजमाना दृश्यते। शब्दोऽपि

तन्मते क्षणिकः—प्रेम क्षणस्थायी, एतदपि न प्रमाणं, यतः कृष्णस्य बाल्यमपि गोपवधूनां मनसि सर्वदा जागरूकं वर्त्तते। कृष्णस्य प्रेमा न क्षणिक एव; सोऽपि च गोपीनां सम्बन्धे यः प्रेमा स एव, अन्यासां रुक्मिण्यादीनां सम्बन्धे यत् प्रेम तत्तु नित्यमेव। एतदेव कविराह—

"मूर्खा एव क्षणिकमनिशं विश्वमाहुर्न धीराः
खेदोऽस्माकं हरिविरहजः स्थिर एवास्ति चित्ते।
नान्यः शब्दो वचनमपि तन्न् तादृशं वस्तु किन्तु
प्रेमैवास्मत्प्रियतमकृतं तच्च गोपाङ्गनासु ॥" ४३

दूतान्तरमिव पदाङ्कदूतमपि मेघदूतस्य अनुकरणेन लिखितम्। तथाप्यत्र कविधर्मः परिस्फुटो वर्त्तते। अनेन एकेनैव ग्रन्थेन अमरत्वमाससाद तत्रभवान् श्रीकृष्णसार्वभौमः। दार्शनिकभाषाद्वारेण यथा तेन कवित्वप्रकटने कौशलं प्रदर्शितम् एवमेव कविकल्पनाद्वारेण अपि भावाभिव्यक्तौ कृतहस्तता प्रकटिता। ३४श-पद्ये कविराह—

हे पदाङ्क, प्रत्येकं पञ्चबाणैः (१) व्रजवधूनाम् एकैकम् असून् (२) हर्तुं मदनस्य मनसि वासना वर्त्तते, तेनानङ्गोऽपि मदनः कुपितो विषधर इव पञ्चभिः पुष्पबाणैरनिशमस्मान् दहति।

---

(१) "अरविन्दमशोकञ्च चूतञ्च नवमल्लिका।
रक्तोत्पलञ्च पञ्चैते पुष्पबाणस्य सायकाः॥"
"सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा।
स्तम्भनश्चेति कामस्य पञ्च बाणाः प्रकीर्तिताः॥"

(२) "प्राणोऽपानः समानश्चोदानव्यानौ च वायवः।
शरीरस्था इमे—"

मदनस्य पञ्चभिर्बाणैः विरहिणामुत्पीडनं सर्वलोकविदितम्, परं सम्मोहनादीनां तदीयपञ्चसंख्यकबाणानां प्रत्येकेन प्राणापानादि-पञ्चप्राण-वायूनामुपरि साक्षादाघातः श्रीकृष्णसार्वभौमपरिकल्पनयैव इदम्प्रथमतया निरवद्यभावेन सञ्जातः ।

कविरयं स्थाने स्थाने प्रख्यात-पूर्वकवीनां मतम् अतिसुमधुरं नवीनभाव-मवतार्य खण्डितमकरोत् । रूपगोस्वामिनः हंसदूते अनुवन्—गोविन्द-विरहेण गोकुलस्य सर्वं शीर्णम् एका यमुनैव गोपाङ्गनानयनाम्बुना वर्धमाना वर्तते—

"शीर्णा गोकुलमण्डली पशुकुलं शष्पाय न स्पन्दते
मूकाः कोकिलपंक्तयः शिखिकुलं न व्याकुलं नृत्यति ।
सर्वं त्वद्विरहानलेन विकला गोविन्द दैन्यं गताः
किन्त्वेका यमुना कुरङ्गनयनानेत्राम्बुभिर्वर्धते ॥" इति ।

तदेनमर्थं प्रतिवदन् कविः त्रिंशश्लोके प्रस्तौति—

"क्षीणैवास्ते तरणितनया वस्तुतस्त्वद्वियोगे
का वा पीना भवति वचनं कस्यचिन्नेति युक्तम् ।
गोपस्त्रीणां नयनसलिलैर्वर्धते सा विशीर्णा
अन्ये नन्दव्रजपुरजना नूनमित्यर्थकं यत् ॥"३०॥

कविवचनस्य अत्रैव सार्थकता—प्राणिमात्रस्यैव श्रीकृष्ण आत्मा, आत्मना विरहितो देहः शवरूपेण परिणमते ; शवो न वृद्धिमेति परम् अनुदिनं क्षीयते एव ।

विश्वस्य श्रेष्ठकवीनां रचनायां चिरन्तनं सत्यं चिरद्योतितं तिष्ठति; श्रेष्ठा हि कवयः कालदेशपात्रनिरपेक्षाः—सार्वकालिकाः सार्वजनीनाः सार्वदेशिकाश्च ।

कवेः श्रीकृष्णसार्वभौमस्य रचनायाम् ईदृशं सत्यम् अपूर्वं रूपं पर्यग्रहीत्। यथा—

"बालक्रीडां रचयति मुहुर्यत्र तत्रानुरागः" (१८)

"स्त्रीभिः प्रेम प्रियतमगतं नैव शक्यं विहातुम्" (३४)

इत्यादि। वङ्गीयः कविः खलु सार्वभौमः, स्वीया हि सम्पद् वङ्गीयानाम् अनुप्रासः। माऽस्तु बाहुल्येन, परं कवेरस्य रचनायां स्थाने स्थाने इयमपि सम्पत् स्फुरितेव वर्तते। तथा च एकादशकवितायाम्—

"कूजद्भृङ्गैरमलकमलैराकुले गोकुले वा"

इत्यादिषु।

ग्रन्थस्यास्य अन्तिमे श्लोके कविर्ग्रन्थरचनकालं सुस्पष्टम् इत्थं निर्दिदेश—

"शाके सायकवेदषोडशमिते (१६४५) श्रीकृष्णशर्मार्पय-
ज्ञानन्दप्रदनन्दनन्दनपदद्वन्द्वारविन्दं हृदि।
चक्रे कृष्णपदाङ्कदूतमखिलं प्रीतिप्रदं शृण्वतां
धीरश्रीरघुरामरायनृपतेराज्ञां गृहीत्वादरात्॥" इति।

श्रीकृष्णसार्वभौमः शान्तिपुराभिजनोऽपि पश्चान्नवद्वीपे चतुष्पाठीं संस्थापयन्नवात्सीत्। नवद्वीपवासिनस्तस्य नवद्वीपाधिपते रघुरामरायनृपते-रादेशेन ग्रन्थविरचनं सुतरां स्वाभाविकम् एव। क्षितीशवंशावली-समाख्यस्य प्रामाणिक-ग्रन्थस्य पर्यालोचनया ज्ञायते यत् सोऽयं रघुरामरायः १६३७ तमशकाब्दतः १६५० तमशकाब्दं यावद् राज्यं कुर्वन् बभौ इति। एवञ्च राज्ञो रघुरामस्य समये ग्रन्थोऽयं विरचित इति यल्लिखितं तत्र समयगतं किमपि असामञ्जस्यं नोपदृश्यते।

किंत्वेवं सुस्पष्टं निर्दिष्टेऽपि ग्रन्थनिर्माणकाले कवेरस्योपजीव्ये नृपतौ तु वैमत्यमवकाशं लभते। तथाहि—क्वचन ग्रन्थे श्लोकस्यास्य शेषार्धे इत्थं पाठान्तरं दृश्यते—

"चक्रे कृष्णपदाङ्कदूतरचनं विद्वन्मनोरञ्जनं
श्रीलश्रीयुतरामजीवनमहाराजाधिराजाहतः ॥" इति

रामजीवनो रघुरामस्य जनक आसीत्। सः १६३७ शकाब्दे दिवं गतः। कवेः श्रीकृष्णसार्वभौमस्य रामजीवनसम्मानास्पदतायां को वा सन्देहावकाशः? ततश्च परस्परविरोधिवचनस्य अनुपलम्भात् पाठद्वयमपि सुसङ्गतमिति प्रतिभाति।

कथं पाठान्तरं संघटितमिति जिज्ञासायां त्वेवम् उत्तरम् उत्पद्यते—प्राचीननृपतेः काल्लादेव सभास्तारभूतेन कविना तस्य मृत्योः परं तत्तनयस्य नवीननृपतेरादेशेन काव्यम् इदं विरचितम्। ततश्च स्वोपजीव्य-जीवित-नृपतेरादेशम् इव अतीतनृपतेः स्नेहकणानपि बहुमन्यमानः कविः पाठद्वय-परिकर्मितम् एव इमं पुष्पिकाश्लोकं स्वकाव्ये निबबन्ध, प्रीतिमता हि भवितव्यं तनयेन पितुर्नामोल्लेखादिति।

अथवैवम् अपि सम्भाव्यते—पूर्वं कविना "धीरश्रीरघुरामरायनृपतेराज्ञां गृहीत्वादरा"दित्येकमात्रपाठयुक्तम् एव श्लोकं विरचय्य स्वं काव्यं रघुरामाय समर्पितं रघुरामश्च काव्यस्यास्योपादेयताविशेषपर्यालोचनेन स्थैर्यं मन्वानः पितुर्नामापि चिरस्थिरं चिकीर्षुः कविना पाठान्तरम् इदं कारयामासेति।

परम्, एतदत्र विशेषेण समालोचनीयं यत् समयेऽस्मिन् वङ्गीय-'राजसाहि' मण्डलान्तर्गत 'नाटोरा'ख्यस्थानेऽपि राजा रामजीवन इत्याख्यः कश्चन नृपतिरासीत्। तत्र चैवंविधा किंवदन्ती वर्तते यत् तस्यैव नाटोराधिपते राज्ञो रामजीवनस्यादेशेन ग्रन्थोऽयं विरचित इति। तत्प्रदेशीय-मातृकायां च रामजीवननामसमन्वित एक एव पाठो दृश्यते न तु द्वौ।

तद्देश्याश्च एवम् प्रत्यवतिष्ठन्ते यत् नाटोरपतिरेव राजाधिराज आसीत् न तु नवद्वीपपतिरपि इति। परम् इयं जनश्रुतिरमूलिकेव प्रतिभाति कस्मिन्नप्यादर्शे श्रीलश्रीयुतरामजीवनमहारजाधिराजाज्ञया इत्युक्तेरदर्शनात्।

किन्तु सत्यामपि तथाविधाया जनश्रुतेरलीकतायाम् एतन्न सम्भावनाबहिर्भूतं यत् नवद्वीपाधिपतेः सभाकविरयं नाटोरराजस्यापि सम्मानं समार्जयदिति। एवञ्च नाटोराधीशं तोषयितुं कविना तादृशपाठान्तरालङ्कृतः कृत्वा अन्तिम-श्लोकः तत्सभायां पठित इत्यपि न विचित्रम्।

महामतेराकवरसाहस्य श्रेष्ठः सभाकविः आकवरीयकालिदासापरनामा गोविन्दभट्टः 'रेओया'महाराजस्य रामचन्द्रस्यापि नितान्तं प्रीतिपात्रमासीत्। स यथा आकवरसाहस्य प्रशंसासूचिकां कवितावलीं लिखितवान् तथा "रामचन्द्रयशःप्रशस्ति" नामकं ग्रन्थं विरचय्य 'रेओया'राजस्यापि स्तुतिं चकारेति को वात्र विशेषः।

"महाराजाधिराज" पदमपि नैकान्ततो नाटोरराजं प्रत्याययति प्रत्याचष्टे वा नवद्वीपाधिपतिम्। एतयोः कोऽपि महाराजाधिराजो नासीदिति तत्त्वम्, उभौ राजानौ आस्ताम्; तथापि प्रकृत्या अतिशयोक्तिरसिकानां कवीनां साधारणभूस्वामिनि भूपति-पदप्रयोगवत् राजन्यपि 'राजाधिराज'पदप्रयोगो न दुर्लभः। अवधीयतां तावदत्रैव, राजाधिराजोऽपि नाटोरराजः कविना 'महाराजाधिराज' पदेन सम्मानितः इति। एवं च नवद्वीपपतिमपि राजाधिराजपदेन व्यवहर्तुं कवेः का विमतिरिति। तस्माद् 'रामजीवन' नामान्विते पाठे नवद्वीपपतिर्वा नाटोराधिपतिर्वा रामजीवनपदेन कविना व्यपदिष्ट इति दुष्करम् एवेदानीं निश्चयेन वक्तुम्। वस्तुतस्तु प्रस्तुतविषये महाराजाधिराजपदेन न काचन आलोकसम्पातसम्भावना विद्यते।

एतत्त्वत्र समालोचनीयम्—"रघुरामरायनृपतेराज्ञां गृहीत्वादरात्" इत्यस्य पाठस्य स्थाने कृतपदो यः पाठस्तत्रोल्लिखितं रामजीवनपदं 'रघुरामराय' साक्षात्यात् नवद्वीपपतिमेव बोधयेत्। दीर्घायुषा ब्राह्मणपण्डितेन पित्रा सम्मानितेन कविना—तनयस्य राज्यकाले तस्यादेशेन काव्यं रचयिष्यत इतीदं सुतरामेव सुवचमिति।

---

श्रीकृष्णतर्कालङ्कारविरचितं

# चन्द्रदूतम्*

काव्यप्रकाश-दायभागटीकाकर्तृतया प्रख्यातेन गोपीकान्तभट्टाचार्यसुतेन श्रीकृष्णतर्कालङ्कारेण विरचितं चन्द्रदूतकाव्यं सर्वथा पदाङ्कदूतवत् न्यायशास्त्रकरम्बितं दृश्यते । आदिश्लोकः कवेः श्रीकृष्णतर्कालङ्कारस्य अनुप्रासप्रवणतां सूचयति ।

> रामो रामाभिरामो रजनिकरसंवत्सरान्ताविराम-(?)
> स्तप्तो लोलुप्यमानो झटिति वियति तं वीक्ष्य चन्द्रं तदीयैः ।
> सूरोऽयं वा स्मरो वा स्मररिपुरपि वा स्वर्णगिर्वा विभाति
> प्राणेशीवक्त्रचन्द्रः किमु गगनचरस्तर्कयामास चैतत् ॥ इति ।

उभयग्रन्थयोः चन्द्र-पदाङ्कदूतयोः सामञ्जस्यं च नितरां सुप्रकटम् ।

> 'सामग्री चेत् फलविरहिणी नानुयोगः समन्तात्'

इति चन्द्रदूते,

> 'सामग्री चेन्न फलविरहो व्याप्तिरेवेति तत्त्वं (३१)

इति पदाङ्के । तथा—

> 'व्याप्यज्ञानं न भवतितरां व्यापकाभावसिद्धौ'

इति चन्द्रदूते,

> 'व्याप्यज्ञानाद् व्रजकुलभुवां व्यापकस्यापि सिद्धौ'

इति च पदाङ्के ।

ग्रन्थेऽस्मिन् हनुमता आनीतं सीतादेव्याः सन्देशं श्रुत्वा माल्यवत्पर्वतस्थितेन श्रीरामचन्द्रेण लङ्कास्थितां सीतां प्रति चन्द्रमुखेन वार्ता प्रेष्यते इत्ययं प्रस्तावः । ग्रन्थोऽयमद्यापि न मुद्रितः ।

---

* Notices of Sanskrit MSS., H. P. Shastri, Vol. II, p. 153.

लम्बोदरवैद्यकृतं

## गोपीदूतम्

लम्बोदरवैद्य-नाम्ना केनचन आधुनिकेन कविना विरचितम्। अस्यायम् आद्यः श्लोकः—

> गते गोपीनाथे मधुपुरमितो गोपभवनाद्
> गता यावद्धूली रथचरणजा नेत्रपदवीम्।
> स्थितास्तावल्लेख्या इव विरहतो दुःखविधुरा
> निवृत्ता निष्पेतुः पथिषु शतशो गोपवनिताः ॥ इति।

गोपीदूतकर्त्ता लम्बोदरवैद्येन तावत् स्वपरिचयो ग्रन्थमध्ये—

> "आसीद् भूमिपुरन्दरो नरवरः श्रीराघवः क्ष्मातले
> ख्यातो देवनदीतटेऽयमकरोद्दीनेन शून्यां महीम्।
> तस्यासौ नृपवासुदेवतनयः··· ···· ····
> तस्मात् शील···· ····नरपतिर्जातो जगद्दुर्लभः ॥"

इत्थं प्रक्रम्य—

> "सोऽयं गीर्वाणनारीगणकलितयशोराशिरासीमभूमी-
> देवश्रीत्याशिषा च स्वयमनुभवते तत्फलं यत्त्वलभ्यम्।
> तस्यैवायं सभास्थोऽभिनवकवितया वैद्यलम्बोदरः सन्
> काव्यं भव्यं यथावत्परिणति कुरुते गोपिकादूतिकाख्यम् ॥"

इत्यनेन विनिर्णीतः।

पूर्वस्मात् श्लोकात् ज्ञायते जगद्दुर्लभाख्यः कोऽपि राजा तस्य पृष्ठ-पोषक आसीदिति।

अयमपि वङ्गीयो दूतकाव्यग्रन्थो नाद्यापि मुद्रितः।

---

त्रिलोचनकृतं

# तुलसीदूतम्

तुलसीदूतमपि भगवतः श्रीकृष्णस्य मधुपुरगमनानन्तरं सञ्जातं गोपीनां दशाविशेषमवलम्ब्य लिखितम्। अत्र काश्चन गोप्यः विरहातितापाद् उद्भ्रमन्त्यः वृन्दावनविपिनं प्रविश्य काञ्चन तुलसीं ( तुलसीवृक्षं ) दृष्ट्वा तामेव दूतीं चक्रुरिति वर्णितं कविना । अस्यापि लेखभङ्गी मनोदूतस्येव सरलसरलापि न दृढबन्धा नापि सुविन्यस्ता। आदर्शोऽपि भ्रमसङ्कुलः।

अत्र लेखकालनिर्णयात्मकमन्तिमं श्लोकं विहाय साकल्येन पञ्चपञ्चाशत् श्लोका वर्तन्ते। एतेषु श्लोकेषु एकत्रिंशत् श्लोकाः तासां सखीनां परस्परालापादिषु विनियुक्ताः। ततो द्वाभ्यां दूतदर्शनम्, शिष्टैः द्वाविंशत्या श्लोकैरेव केवलं सन्देशादिकथनम्।

अयं ग्रन्थः त्रिंशदुत्तर-सप्तदशशताब्द्यां (१७३०)* लिखित इति मन्ये। दुर्भाग्यवशात् लेखेन निर्णीतोऽपि कालः लेखस्यास्पष्टत्वाद् अनुमेय एव जातः। तथा च—

> शाके खभ्रशुचि(?) श्रुति-क्षितिधरानन्तामिते हायने
> मेषाहे कलशीतहेलि-हयदङ्माने मुदा यत्नतः।
> नत्वा ग्रावसुताङ्घ्रिफुल्लकमलद्वन्द्वं व्यलेखीद् द्विजः
> श्रीलः पुस्तवरं त्रिलोचन इदं दूतं तुलस्यादिकम्॥

*The MS. said to have been preserved in the Sanskrit Sahitya Parishat cannot be traced now.

अत्र "श्वभ्र-शुचि-श्रुति" इति पदत्रयं सन्देहबीजम्। अस्माभिस्तु "श्वभ्र-शुचि" इति पदं श्रुतिविशेषणत्वेन गृहीत्वा पूर्वोक्तः कालो निर्णीतः। तस्य तु श्वभ्रश्रुतेरर्थः। स्पष्टत्वात् तथैव कथं न लिखितमिति प्रश्नोऽपि लेखकस्य निरङ्कुशत्वात् प्रत्याख्येयः। अस्य लेखशैली अस्पष्टेति तृतीयचरणे 'ग्रावसुते' त्यत्रापि दृश्यते। तथाहि 'ग्रावसुते'त्यस्य यदि पार्वती इत्यर्थः तदा कथं 'शैलसुते'ति न कृतम्? इत्यलमुपजीव्यस्य दोषप्रकाशनेन।

इदानीं दृष्टान्तविधया केचन श्लोका उद्ध्रियन्ते। तत्रायमाद्यश्लोकः—

नाथे याते मधुपुरमतिक्षोभविभ्रष्टचित्ता
गोपी काचित् कलयति सखीरन्तरङ्गाः समीपे।
प्राणत्यागादतिगुरुतरे तस्य बन्धोर्वियोगे
केन स्थेयं मुहुरिति वचो व्याकुलात्ता बभाषे ॥१

\+ × +

इदानीम् एका अन्याम् उद्दिश्य प्राक्तन्या संयोगावस्थया सह साम्प्रतिक्या विरहावस्थायाः तुलनां कुर्वती विषादम् आविष्करोति—

पुरासं पीयूषार्णवसलिलजाताप्लवतनु-
स्तदाख्याने प्राणेश्वरि सततसानन्दहृदया।
अहं सैवेदानीं सजलजलदश्यामवपुषो
वियोगव्यालालीविषजलधिगा दग्धहृदया ॥२

किमन्यद्वक्तव्यं विकचनवनीलोत्पलरुचे-
स्तनोस्तुल्यन्तावत् सुरभि नवनीलोत्पलमिदम्।
मनोऽत्यन्तं क्लिश्नात्यनिशमनिशं तस्य वपुषो
मुरारेरामोदैर्मदितमयि बन्धप्रियतमे ॥५

यदा माने म्लानिः समजनि ममैतन्मुखरुचेः
कृपासिन्धुर्बन्धुस्तदनु मुखमालिम्प्य सलिलैः ।
न चैतत्ते युक्तं कथमपि मदीयप्रियतमे
तदा शान्तिन्निन्यैर्बहुभिरिति वाक्यैः समकरोत् ॥५

ममैतन्म्लानत्वाः पथि पथि खरैः सूर्यकिरणैः
परिभ्रान्तिश्रान्त्या जनितमुखमालिन्यमतुलम् ।
न कोऽप्येवं लोके प्रियजन इवालोकि ललना
समाश्वासं वाक्यैः सुहृदपि करोत्यब्जवदने ॥६

इदानीं सख्यः सम्भूय कृष्णस्य मधुपुरगमनमविश्वसत्यः प्राहुः—

मनोऽस्माकं ज्ञातुं निविडगहने नूनमधुना
वसत्येको नाथः स घनघनवृन्दद्युतिधरः ।
न चास्मत्प्रेमाब्धिं मधुपुरमगाज्जातु सहसा
समुल्लङ्घ्य प्राणप्रियतमविभुः पीतवसनः ॥१०

सदोद्विग्नाः खिन्नाः प्रियतममुखालोकविरहे
वसामः केनोच्चैस्तरुभिरयि सार्धं किल वयम् ।
सखि त्यक्त्वा गेहं गहनगमनं श्रेय इति ताः
परामर्शं चक्रुर्विरहभुजगीदष्टहृदयाः ॥११

एवम् आलोच्य ताः सर्वं वृन्दावनविपिनमालोडितवत्यः । परं तथापि श्रीकृष्णम् अप्राप्य तस्य मधुपुरगमनमेव निश्चितवत्यः —

एवं विचिन्त्य बहुधा व्रजगोपबालाः
प्राणेश्वरस्य विरहैरतिदीनभावाः ।
वृन्दावनान्मधुपुरीगमनं तदीयं
निश्चित्य चेतसि तदा मुहुराविलेपुः ॥२३

गतं चेतोऽस्माकं विरहदहनैस्तत्रभवता
विदग्धैस्तद् युक्तं कथमपि सतां कर्म कठिनम्।
यदीतो गन्तव्यं मनसि तव वृत्तां किल पुरा
पुरैव प्रेमाब्धिप्रकटनमयुक्तं व्रजपते ॥२४

अधुना काचन गोपी श्रीकृष्णस्य मिथ्याभाषितां तया च समुत्पत्स्यमानं धर्मविप्लवम् आविष्कुर्वती कृष्णम् आक्षिपति :—

नास्ते किञ्चित् प्रियतमधवे गुह्यमेतत्त्वदग्रे
व्यक्तं चैतन्मम तु भवता बन्धुना पूर्वमुक्तम्।
गुप्त्वात्मानं वचनमधुनाऽकारि मिथ्या स्वकीयं
प्रामाण्यं ते वचसि न पुनर्जायते सज्जनानाम् ॥२५

अप्रामाण्यं श्रुतिषु बहुभिर्मीयते त्वद्वचस्त्वा-
दार्षैरेतद्वितथवचने वीक्ष्य दृष्टान्ततां च।
पश्चात् केषां कथमपि जनानामपि स्वर्गहेतौ
यागे वृत्तिर्न भवति जगन्नाथ नैतत् सुयुक्तम् ॥२६

आभ्याम् अन्तिमश्लोकाभ्यां कवेस्त्रिलोचनस्य दर्शनादिशास्त्रज्ञानमासीदिति वक्तुं शक्यते।

आसंसारं विदितमयि ते नाम नावं गृहीत्वा
गत्वा पारं भवजलनिधेरश्रमास्त्वां लभन्ते।
एतच्चित्रं वयमिह भवे दुःखसिन्धौ निमग्नाः
प्राप्यापि त्वां व्रजकुलपते गोपिकाप्राणबन्धो ॥२७

एवं बहु विलप्य ताः वनं भ्रमन्त्य एकं तुलसीकाननम् आलोक्य तुलसीं दूतत्वेन परिकल्प्य प्रोचुः

अये वृन्दे वन्द्ये किमपरमनिन्द्ये त्वयि वयं
वदामः श्यामाङ्घ्रेरुपरि तव वासो यदनिशम् ।
सदा तस्याख्यानैः क्षयिततनवः शून्यहृदया
दयालेशः कस्य क्षणमपि न चास्मासु भवति ॥३४

\+ × ×

अस्मद्वियोगवशतो यदि तत्पदाब्जे
गच्छन्त्यदृश्यसरणिर्दयिते प्रयत्ना ।
तेनैव हन्त तुलसीदलदानमस्मा-
दस्माकमाशु भविता किल दुःखनाशः ॥३७

त्वञ्चाधिकप्रियतमा तुलसि प्रियोऽपि
जानीम एव किल बन्धुजनस्य तस्य ।
तस्मादतिप्रियकरी भवती सखी नो
नूनं त्वया मधुपुरीगमनं विधेयम् ॥३८

एवं नानाप्रकारेण गमनाय तुलसीं प्रोत्साह्य तस्या एकाकिकत्वपरिहारार्थं चन्दनगन्धं स्वेषां भक्तिं च सहायीकृत्य "वृन्दावनं परित्यज्य नैव गमिष्यामी"ति तुलस्याः सम्भाविताम् उक्तिं शास्त्रप्रमाणोपन्यासेन परिहरन्त्य आहुः —

यास्यामि नैव परिहाय वदेद् यदीति
वृन्दावनं पुनरपि त्वयि तन्न युक्तम् ।
वृन्दावनं निगदितं कविभिस्तदेव
यत्रास्ति ते निवसतिर्भुवनेषु वृन्दे ॥४५

अतः परं कविः कथं तुलसीमेव दूतीं कृतवान् पदाङ्कं वा मनो वा कथं न दूतं चकारेति कल्पितं पाठकानां प्रश्नं समादधद् गोपीमुखेनोक्तवान्—

एतेन त्वं यदिह मनसा शङ्कसे किं मनांसि
दौत्ये युक्तान्यपि वयमहो प्रेरयामः स्म नैवम् ।
किं चास्माभिः प्रहितगमनान्यागतानीति नैव
चौरैर्नीते विरमति यतः सत्त्वमेतन्निरस्तम् ॥४१

आस्ते भूरि प्रियतमपदाब्जिहृसेतद्वनान्ते
दौत्येऽस्माभिर्न हि सखि वरे किंप्रयुक्तं प्रयुक्तम् ।
आशङ्क्येयं न पुनरुचिता ज्ञानवत्या भवत्या
वृत्तान्तः किं रहसि जनितो वन्धुजन्ये न गोप्यः ॥४८

अतः परं नैपधीयचरितानुकरणेन कविः कीदृशे काले अयं सन्देशो न वक्तव्य इति कथयति—

अन्यासक्तो न भवति यदा नान्यचिन्तापरो वा
नो वा तावद्भवति यदहो क्षुत्तृपावाधितश्च ।
नो वा निद्राविकलसमये यद्यदस्मन्निवेद्यं
तत्तद्वाच्यं प्रियतममते प्राणवन्धोः समीपे ॥५२

ततश्च—

निगदितमिति धन्येऽस्माभिरेकान्तमान्ये
घनरुचिविरहेण व्याकुलाभिस्त्वदग्रे ।
विरहजलधिपारं येन यामो भवत्या
प्रियतमपदपद्मे तत्तथा ज्ञापितव्यम् ॥५५

इत्यनेन ग्रन्थसमाप्तिः कृता। परिशेषे ग्रन्थयोरनयोर्मनोदूत-तुलसी दूतयोः सम्बन्धे इत्थं वक्तुं शक्यते यत् दूरान्वयादिदोषसत्त्वेऽपि लेखस्य सरलता तु नास्वीकार्या इति ।

एकजातीया एव प्रायेण अनयोर्लेखपरिपाटी। यत् च अन्तरान्तरा व्याकरणनियमातिक्रमणं दृश्यते तत् कवेरशक्त्या वा लिपिकरप्रमादाद्वा इति न सम्यक् निर्धारयितुं शक्यते ।

वैद्यनाथद्विजकृतं

## तुलसीदूतम् (२)

द्वितीयम् इदं तुलसीदूतं वैद्यनाथद्विजकृतम्। काव्यमिदं षडधिक-सप्तदशशत-शाकवर्षे विरचितमिति अन्तिमश्लोकादवगम्यते। तथा च—

शाके तर्कनभोहयेन्दु (१७०६) गणिते श्रीवैद्यनाथो द्विजो
गोपीकैरवकाननप्रियकलानाथाङ्घ्रिपाथोरुहम्।
ध्यायंस्तच्चरणारविन्दरसिकः प्रज्ञावतां प्रीतये
प्रीत्यै तस्य चकार चारु तुलसीदूताख्यकाव्यं महत्॥ इति।

अस्याद्यश्लोकश्च—

"नाथे याते मधुपुरमतिक्षोभविभ्रष्टचित्ता
गोपी काचित् कलयति सखीरन्तरङ्गाः समीपे।"

इत्यादि-त्रिलोचनद्विजकृत-तुलसीदूतानुकारीति दृश्यते।

परन्तु पूर्वत्र ग्रन्थकारः त्रिलोचन इति अत्र च वैद्यनाथो द्विज इति ग्रन्थविरचनकालोऽपि भिन्नतया उक्त इत्यस्मात् ज्ञायते यद् एतौ ग्रन्थकारौ भिन्नावेव। द्वितीयमिदं तुलसीदूतं पूर्णाङ्गतया न लब्धुं शक्यतेऽधुना इति परं दूयतेऽस्माकं हृदयम्।

पूर्वोक्तकालनिर्णायकश्लोकेन ज्ञायते त्रिलोचनकृतं तुलसीदूतम् एतस्माद् दूतकाव्यात् चतुर्विंशत्या वर्षैरर्वाचीनमिति। अयं ग्रन्थोऽपि न मुद्रितः।

---

हरिदासकृतं

## कोकिलदूतम्*

हरिदासनाम्ना शान्तिपुरवास्तव्येन केनचन कविना लिखितम् इदम् इति कविपरिचितिश्लोकात् ( काव्यवहिर्भूत-द्वितीयश्लोकात् ) ज्ञायते। मुद्रित-पुस्तकस्य मुखपत्रे तु "हरिमोहनप्रामाणिकेन रचित"मिति लिखितम् अस्ति। रचनाकालश्च अस्य अन्तिमश्लोके १७७७ शकाब्दो निरूपितः। मुद्रण-कालः पुनः १७८५ शकाब्द इति मुखबन्धे निवद्धम्। शतश्लोकात्मकं मूलकाव्यम्। तद्वहिश्च श्लोकत्रयेण यथाक्रमं काव्यप्रशस्ति-कविपरिचय-काव्यकालनिर्णया इति मिलित्वा त्र्यधिकशतश्लोकाः। शतश्लोक्यां मन्दाक्रान्ता छन्दः।

मार्गनिर्देशशून्ये सन्देशमात्ररूपे अत्र काव्ये मथुरागतं श्रीकृष्णम् उद्दिश्य आत्मविरहवाधया राधया कोकिलमुखेन सन्देशः प्रेषित इति वस्तु। अत्र कविकोविदेन वहव एव श्लोका वाच्यलक्ष्यव्यङ्ग्यादिविविधार्थसमृद्धाः कृताः इति दुर्गमा एव ते। ये त्वेकार्थाः ते अपि न सुगमाः कृताः। तथापि अस्य पाण्डित्यं काव्यरचनशक्तिश्च सर्वथा स्वीकार्यं एव।

दृश्यताम् आद्यपद्यम्—

वृन्दारण्यान्मधुपुरमिते माधवे तस्य पश्चा-
दायास्यामि त्वरितमिति-वाग्बीजसम्भूतमेकम्।

---

*With the commentary Manimala by Kalidas Sen, Ed. by Sudhamay Pramanik, Calcutta, 1311 B.S. ( १३११ वङ्गाब्द )

आशावृक्षं नयनसलिलैः सिञ्चती वर्धयन्ती
राधा बाधाविवशहृदया यापयामास मासान् ॥ इति

पाठकानां विरागभयाद् अनेकार्थाः श्लोका न उल्लिख्यन्ते। रचनारीत्या पूर्वोक्तं काकदूतं यद्यप्यस्य सजातीयं भवितुमर्हति, तथापि तस्मादस्य महत् पार्थक्यं वर्तते। काकदूतं केवलं पाण्डित्यसूचकम् इदन्तु पाण्डित्यं सूचयदपि कवेः कवित्वशक्तिम् अपि न तिरस्करोतीति।

अपरञ्च, मेघदूतीयच्छन्दसा लिखितायाम् अपि अस्यां शतश्लोक्यां अशीतितमश्लोके "चेतसीव प्रसन्ने" इति पदम् एव केवलं मेघदूतं स्मारयतीति महदाश्चर्यमेव। अन्या चेयं नवीनता अस्य काव्यान्तरापेक्षया यत् सन्देशप्रेरणानन्तरं प्रथमं हृदयमध्ये पश्चाद् बहिरपि आविर्भूतेन प्रियेण प्रेयस्याः समागम इति।

---

सिद्धनाथविप्रकृतम्

# पद्मदूतम्

सिन्धौ सेतुवन्धनार्थं तीरभूमिम् आगतं रामचन्द्रं श्रुत्वा अशोकवन-वासिन्या सीतया पद्मं दूतीकृत्य तत्समीपे प्रेषितम् इत्याख्यानकम् उपजीव्य कृतम् इदं पद्मदूतम्। द्वाषष्टिश्लोकात्मकमिदम्। अत्र च दूतस्य प्रस्थापनव्यवस्थायाम् एकान्तव्यग्रेण कविना सन्देशभागो नितरां नीचैः कृतः। सन्देशश्च केवलम् "माम् उद्धर" इति विना नान्यो दृश्यते। नात्र प्रेयस्या प्रेयसि किमपि विरहदुःखं निवेदितं दूतद्वारा। विरहकातरता पुनः सीतायाः स्वसंवेद्यविधया एव कविना किञ्चित् प्रकाशिता। अस्य काव्यस्य आद्यश्लोके वस्तुनिर्देशः। द्वितीयाद्येकादशश्लोक्या [२-१२] यथोपस्थितानां विरहोद्दीपकानां भ्रमर-परभृत-वारिद-स्मर-पवन-चन्द्रादीनां तिरस्कारेण सीताया विरहौत्कट्यप्रख्यापनम्। त्रयोदशेन दूतदर्शनम्। अष्टादशभिः [१४-३१] दूतप्रशंसा, दौत्यार्थम् अनुनयः, रावणकृतस्वहरण-वृत्तान्त-स्वामिसौभाग्यादिकथनञ्च। अतः परं द्वाभ्याम् आकस्मिकतया रामपौरुषख्यापनम्। समनन्तरञ्च सर्व एव श्लोकाः दूतकृत्य-दूतप्रोत्-साहनादिपराः। केवलम् अन्तिमश्लोकद्वयं स्वोपजीव्यराजकीर्तनसहित-कविवंशदेशादिपरिचय-काव्यकालनिर्णयपरं वर्तते।

अत्र कविना सम्यङ् निर्णीतोऽपि काव्यरचनकालः अस्मासु पुनरनि-र्णीत एवास्ते। कालनिर्णायकश्लोकश्चेत्थम्—

आसीदेको धरणिविबुधश्चन्द्रनाथाभिधानः
सूनुस्तस्याखिलगुणयुतो विप्र आनन्दनाथः।

तत् पुत्रोऽब्धिद्विपपवनशके सिद्धनाथाख्यविप्र-

स्तद्देशस्थो व्यरचयदिदं पद्मदूताख्यकाव्यम् ॥ इति ।

अत्र अब्धि-द्विप-वन-शके इत्यनेन कः शकाब्दो बोधितः कविनेति न ज्ञायते। वङ्गभाषया अन्तरितः अन्य अर्थश्च कविना एवं लिखितः—"सप्तशत-द्व्यशीतिशकाब्दे" इति। "स पापिष्ठस्ततोऽधिकः"! एतेनापि कः कालः कविना बोधयितुम् इष्टः इत्यपि स एव जानाति। अस्माकं पुनः अत्र 'शप्तदशशत' इति भवितव्यम् इति प्रतिभाति। तच्च प्रतिभानं कया रीत्या वनशब्दसंवादि स्यादित्यपि चिन्तनीयम् एव।

काव्येऽस्मिन् कवेः कवित्वापेक्षया प्रहेलिकादिप्रायवाक्चातुरी समधिका परिलक्ष्यते। कियत्पूर्ववर्तिनि कविसमाजे अयम् आचारः व्यापकताम् अधत्त। गृह्यताम् एकम् उदाहरणम्—

सुग्रीवस्याङ्गद उत यदा भ्रातृपुत्रो रहस्याद्

यत्त्वां पृच्छेद् वदतु सुपमं बुद्धिसत्त्वां प्रकाश्य।

प्रष्टव्ये कस्त्वमिति हि सुहृत्तस्य चाहं तदा क-

श्चेदित्युच्यात् सलिलज भवानङ्गदं तं स एव ॥५०॥

अत्र 'क' शब्दस्य 'स' शब्दस्य च सूर्यवाचकताम् आश्रित्य कविना अपह्नुत्यलङ्कारोक्तदिशा इयं वचनभङ्गी सन्निवेशिता। अत्रायं श्लोकस्य अन्वयः—'त्वं कः'? इति 'प्रष्टव्ये' (विषये) 'अहं तस्य सुहृत्' इत्युत्तरम्। (अत्र तस्य इति कस्य, सूर्यस्येत्यर्थः)। ततश्च यदि पृच्छेत् 'तदा कः' (तदा तच्छब्देन कः प्रतीयते इत्यर्थः), उत्तरम्, 'स एव' (क एव) अर्थात् सूर्य एव, अथ च 'स'शब्देनापि सूर्य उच्यते। एवम् एकपञ्चाश-श्लोकेऽपि ईदृशी एव भङ्गी।

कविरयं नैयायिक आसीदिति वचनपरिपाट्या परिज्ञायते।

---

कृष्णनाथविरचितं

# वातदूतम्

इदं पूर्वस्थलीवास्तव्य-कृष्णनाथन्यायपञ्चाननविरचितम्। अत्र हि रावणापहृतया लङ्कायाम् अशोकवने स्थितया सीतया रामाय वातो दूतीकृत इति वृत्तान्तः। तत्राद्यश्लोकत्रयेण सीतायास्तात्कालिकी विरहावस्था वर्णिता। ततः सप्तश्लोक्या [ ४-१० ] दौत्याय पवनस्य निमन्त्रणम्, तस्य प्रोत्साहनञ्च। ततः त्र्यधिकविंशत्या श्लोकैः [ ११-३३ ] पथिवर्णनम्; [एतत्प्रसङ्गे च सुवेलपर्वत-राक्षसाध्युषित-भिल्लाध्युषितप्रदेशार्ष्यमूकपर्वत-पम्पासरोवर - दण्डकारण्यभूभाग - जनस्थान - पञ्चवटीवन-गोदावरीनद्यो वर्णिताः]। ततस्त्रिभिः [ ३४-३६ ] रामाश्रमवर्णनम्, ततो दशभिः [३७-४३] रामवर्णनम्। पुनः त्रिभिः [ ४७-४९ ] प्रसङ्गत आश्रमवर्णनम्। ततः सप्तभिः [५०-५६] सीतादेव्याः सखीभूतायाः तद्वनाधिदेवताया वर्णनं तस्यै सीतासन्देशकथनञ्च। पुनः षोडशभिः [५७-७२] मुन्याश्रम-सूर्योदयास्तमय-रामावस्थादिवर्णनम्। ततः चतुर्विंशत्या [ ७३-९६ ] वर्णितेषु सन्देशेषु केचन राममुद्दिश्य, केचन लक्ष्मणमुद्दिश्य केचन च उभावुद्दिश्य कथिताः। शेषभूतैश्चतुर्भिः पुनः पवनप्रार्थन-तच्छुभाशंसनादीति।

एतन्मन्दाक्रान्ताच्छन्दोनिबद्धम्, भाषया भावेन च प्रायेण अनुकरणदोषविमुक्तम्। तथापि रचनाकाठिन्यात् दुरुद्धर एव रसः। प्रायेण सप्ततिवर्षेभ्यः पूर्वमिदं लिखितम् इति प्रतिभाति।

---

भोलानाथधरामरकृतं

## पान्थदूतम् *

इदं गङ्गाटिकरीवास्तव्येन विप्रवंशोद्भवेन भोलानाथनाम्ना केनचन आधुनिकेन कविना विरचितम्। एतदपि राधाकृष्णप्रेमविषयकम्। पदाङ्कदूतवदेव अत्रापि काचिद् गोपी यमुनातीरं गत्वा मूर्छिताऽभवत्, मूर्छापगमे च मथुरागामिनं कमपि पान्थमालोक्य तं दूतीकुर्वती श्रीकृष्ण-समीपे प्रेषयदिति विषयवस्तु वर्तते। तथा च श्लोकः—

काचित् क्वापि दिने दिवाकरसुताकूले सखीभिः समं
प्रत्यूषे विरहग्रहग्रहणतो वैराग्यमाप्ताऽथ सा।
कृष्णं तज्जलनीलपेशलतनुं स्मृत्वाऽपतन्मूर्छिता
दूतीदत्तजलैर्विबुध्य मथुरापान्थं कमूचे वचः॥ इति।

स्वपरिचयश्च अन्तिमे श्लोके एवं दत्तः कविना—

श्रीसीतापतिसेवकेन टिकरीवासेन काव्यं मुदा
भोलानाथधरामरेण रचितं यत् पान्थदूताह्वयम्।
राधाकृष्णपदारविन्दविगलन्मध्वादराः सादराः
सन्तस्तत् परिशीलयन्तु सततं सन्तोषसंप्राप्तये॥ इति।

शार्दूलविक्रीडितच्छन्दसा विरचितमिदं काव्यं पञ्चोत्तरैः शतश्लोकैः समाप्तम्। भाषया भावेन च नातिसमृद्धम् इदम्।

---

* Published by the Prācyavāṇī Mandir as Vol. 5 of Samskrit-Dūta-Kāvya Samgrah Series, Calcutta, 1949.

रामदयालतर्करत्नविरचितम्

## अनिलदूतम्*

सर्वैरविदितेन [illegible] रामदयालतर्करत्नाख्येन विदुषा रचितम्। इदमस्य दूतकाव्यस्य प्रथमा कविता—

श्रीमत्कुञ्जे मधुपुरगते निर्मिता कापि बाला
गोपी नीलोत्पलनयनजां वारिधारां वहन्ती।
म्लानिप्राप्त्या शशधरनिभं धारयन्ती नवास्यं
गाढप्रीतिच्युतिकृतजरा निर्भरं कातराऽभूत्॥ इति।

पुस्तकमिदं नाद्यापि मुद्रितम्।

---

अम्बिकाचरणदेवशर्मविरचितं

## पिकदूतम् (२)

अम्बिकाचरणदेवशर्मनाम्ना केनचित् पण्डितेन कृतम्। अस्येयम् आद्या रचना—

कुञ्जं कूजन्मधुकरपिकैः सङ्कुलं गोपकान्ता
काचित् फुल्लत्कमलनयनाऽगच्छदङ्गप्रधाना।
तस्मिन्नेकं मधुरवचनं कोकिलं पादपस्थं
दृष्ट्वा हृष्टाऽवददिदमसौ कृष्णवत् कान्तिभाजम्॥ इति

नायं ग्रन्थोऽद्यापि प्राकाश्यं नीतः।

---

* The description of this and following works was intended to be incorporated in the Introduction (vide Prastāvanā); subsequently, we decided to include this in this part.

गौरगोपालशिरोमणिविरचितं

## काकदूतम्

इदं दूतकाव्यं दीनबन्धुमुखोपाध्यायसुतेन गौरगोपालशिरोमणि-नाम्ना केनचन बङ्गीयेन कविना विरचितम् प्रायेण त्रिषष्टिश्लोकैः पूर्णम् (1)। तथा चास्य निर्माणकालः कविना अन्तिमे पद्ये एवं लिखितः—"शाकेऽचलाचन्द्रमनङ्गजेन्दौ [१८११ शाकवर्षे]" इति। शिष्टैराहतान् मेघ-पवन-पथाङ्क-हंस-पिकभ्रमरादीन् हित्वा काकस्य दूतीकरणे कारणं कविना एकादशभिः [९—१९] श्लोकैः कथितम्।

अत्र विरहिण्या राधया कृष्णानयनार्थं काको दूतीकृत्य मधुपुरीं प्रेषित इति चिरपुराणम् एव वस्तु प्रतिपाद्यम्। परम् अत्र वृत्तान्तरवत् नायिकाविरहनिवेदनम् एकान्तत एव परिहृतं कविना। अत्र प्रथमं काकदर्शनम्, तस्य दौत्यसामर्थ्यविवेचनम्, अन्येषामसामर्थ्यख्यापनम्, वर्णादिसाधर्म्येन काक-कृष्णयोः साम्यादिप्रतिपादनम्, काकस्य कृष्ण-दर्शनजनितोपकारप्रकाशनम्, कथं कीदृशः कृष्णो द्रष्टव्य इत्युपदेशः इत्यादिरूपा वक्तव्यविषया वर्तन्ते।

कवित्वापेक्षया पाण्डित्यम् एवात्र अधिकं पदं चकार इति नेदं काव्यं रसिकान् ईषदपि तोषयेत्। तथापि कवेर्नैपुण्यं पुनः सबहुमानं स्वीकार्यम् एव।

---

(1) Colophon: इति पाँचथुपिनिवासि-फुलियामेलीय-सुप्रसिद्ध-गङ्गाधरठाकुरकुलतिलक-महानुभाव-श्रीयुक्त-दीनबन्धुमुखोपाध्यायसुत-श्रीगौर-गोपालशिरोमणिविरचितं काकदूतं समाप्तम्।

बहोः कालात् प्रागेव ग्रन्थोऽयं प्रकाशित इत्यस्मात् कारणात् नायं बहुनाऽयासेनापि लब्धुं शक्यते। लण्डनस्थ-कमन-ओयेल्थ [भूतपूर्व-इण्डिया-अफिस] ग्रन्थागारेऽपि नायं ग्रन्थः संरक्षितः।

एकाधिकार्थपदविन्यासकण्टकिताः श्लोका विना व्याख्यां दुर्बोधाः। सजातीयपदविन्यासे च लेखकस्य महान् अनुरागो दृश्यते। दृश्यताम् एको दृष्टान्तः। काकदर्शनानन्तरं राधा किमयं मम नाशार्थम् आगतः उतोपकारार्थम् इति चिन्तयति। तत्र च उभयविधत्वम् एव काकस्य भवितुम् अर्हतीति काकपदयुक्त-पदार्थान्तराणां नाशकत्वोपकारकत्वरूपोभय-कार्यकारितां कविराह—

काकोदरो यादृश एव जन्तोः काकध्वजो वा जलसम्भवस्य।
काकोलरूपः किमु नाशकोऽत्र काकोऽयमागान्मम सन्निधाने ॥६
काकाञ्चाजीर्णजीर्णज्वरकृमिकफहा काकजम्बूश्च दाह-
मिश्रातीसारनाशिन्यथ मधुरगुणा पाककाले यथा स्यात्।
काकेन्दुर्वान्तिपित्तप्रशमक इति वा काकमाची त्रिदोष-
शान्त्यै शक्ता तथायं किमु मम विरहस्यान्तकर्ताऽन्तिकोऽभूत् ॥७

इति। यथा तथा वा भवतु अस्य शक्तिविशेषः प्रशस्य एव। दृष्टान्तान्तराणि बाहुल्यभिया नोद्ध्रियन्ते। नानाविधैश्छन्दोभिः काव्यम् इदं विनिर्मितम्।

ग्रन्थस्य मुखबन्धात् ज्ञायते उपेन्द्र-गोस्वामीति कवेरस्य गुरोर्नाम। अन्तिमे श्लोके कविः तस्य प्रीतिं याचते—

एतत् समाप्तं गतमस्तु नित्यं
तुष्ट्या उपेन्द्रस्य गुरोर्ममापि ॥ इति।

## पादपदूतम्

नवद्वीपवासिना पण्डितेन प्रभुपाद-गोपेन्द्रनाथगोस्वामिना विरचितम्। अस्यायं वस्तुनिर्देशः —

श्रीगौराङ्गे भुवनदयिते नीलशैलं प्रयाते
साध्वी भर्तुर्विरहविधुरा तस्य विष्णुप्रिया स्त्री।
दुःखेनार्ता प्रकृतिमधुरा भर्तृरूपं स्मरन्ती
त्यक्त्वा शय्यां व्रजति सहसा प्राङ्गणं द्रष्टुकामा॥

ततश्च सा विष्णुप्रिया प्राङ्गणप्रान्ते गौराङ्गप्रियं निम्बतरुं दृष्ट्वा तं दूतीकृत्य नीलाचलं प्राचालयत् इति। अत्र आहत्य चतुस्त्रिंशत् श्लोकाः। तेषु अन्तिमं श्लोकत्रयं संख्याङ्केन अननुगृहीतं दृश्यते; कारणं न विद्मः। सप्तदशवर्षेभ्यः पूर्वमिदं प्रकाशितम्, लेखकालस्तु न लिखितः।

अत्रेत्थं मार्गनिर्देशः—श्रीधाम-नवद्वीपतः स्वधुन्यां 'निदया'ख्यघट्टस्यानतिदूरे पुरावृत्तख्यातस्य महाराजलक्ष्मणसेनस्य राजधानी। ततः शान्तिपुराख्यपुरम्, तदनन्तरं त्रिवेणीतीर्थम्, ततश्चातिविप्रकृष्टः 'सुन्दरवन' नामा प्रदेशः, ततो 'वङ्गोपसागर' शब्दितोऽब्धिः, ततो 'वैतरणी'नाम नदी, ततश्च महानद्याख्या नदी, ततः श्रीक्षेत्रम् इति। अन्योऽयमाधुनिकः सुप्रापश्च तस्मात् प्रपञ्चनाद्विरम्यते।

त्रैलोक्यमोहनगुहनियोगिविरचितं

## मेघदौत्यम्

इदमेकं दूतकाव्यं प्रायेण अर्धशताब्देभ्यः पूर्वं लिखितम्। कविश्च अस्य त्रैलोक्यमोहनगुहनियोगीति नाम्ना प्रसिद्धः। शतद्वयाधिकाः श्लोका मन्दाक्रान्ताच्छन्दसा अत्र लिखिताः कविना। यक्षसन्देशमादाय संप्राप्तं मेघं यथाविवेकेन सूचयन्ती यक्षपत्नी पुनस्तं यक्षसमीपे प्रेषयामासेति विषयः अस्य काव्यस्य। एतच्च मेघदूतस्य प्रतिकाव्यम् ( प्रत्युत्तरम् ) इति वक्तुं शक्यते। अत्र यद्यपि यथासंभवं कविना मेघदूतोक्तानि पदान्येव प्रयुक्तानि, तथापि किञ्चन नावीन्यमपि विन्यस्तम्। स्थूलतः एकोऽपि सर्गो वचनभङ्ग्या पृथग् एव विहितः कविवरेण। सरलं पदकदम्बकम्, सरला च रचनापद्धतिः। कविना स्वशक्तिप्रदर्शनाय मङ्गलाचरणाष्टके एकाक्षर-द्व्यक्षरात्मकं श्लोकत्रयं लिखितम्। बहुतरगुणयुक्तमपि काव्यम् इदं बहुत्र छन्दोव्याकरणादिनियमम् उपैक्षत इति दूयते हृदयम्। विपुलतया इदम् अद्वितीयं दूतकाव्येषु।

---

कालीप्रसादकृतं

## भक्तिदूतम्*

अत्र मुक्तिरेव कवेः कालीप्रसादस्य प्रिया। तां प्रति भक्तिदूती-मुखेन सन्देशः संप्रेष्यते। ग्रन्थोऽयं त्रयोविंशतिश्लोकात्मकः।

---

* Notices of Sanskrit Mss., (R. L. Mitra,) Vol. III, p. 27

[illegible] कृतं

[illegible]*

[illegible] ग्रन्थे [illegible] गोपीभिः [illegible] कृष्णं प्रति [illegible] ।

[illegible] (Gento Code, [illegible] अन्यतमः [illegible] एव अस्य ग्रन्थस्य कर्ता इति संभाव्यते ।[1]

---

महामहोपाध्यायेन अजितनाथन्यायरत्नेन कृतं

## बकदूतम्

महामहोपाध्यायेन कविभूषणोपनाम्ना नदियाप्रदेशाभिजनेन अजितनाथ-न्यायरत्नेन नानाविधैश्छन्दोभिर्विरचितम् इदं दूतकाव्यं वयसा दूतकाव्येषु सर्वकनिष्ठं वर्तते । काव्यस्यास्य कवेः स्वकराङ्कित आदर्शः तत्सुतस्य श्रीशैलेन्द्रनाथभट्टाचार्यस्य सौजन्येन अस्माभिरधिगतः । अत्र केषाञ्चित् श्लोकानां निर्माणकालोऽपि कविना आधुनिकरीत्या सन्निवेशितो दृश्यते । तत्र सर्वान्तिमः कालस्तु षड्विंशत्यधिकत्रयोदशशततमाब्दीयो मार्गशीर्षमासः (१३२६, अग्रहायणः) समुपलभ्यते, एतेनैवास्य सर्वेषु दूतकाव्येषु कानिष्ठ्यं सुप्रतिष्ठम् अवधार्यते ।

---

* संस्कृतसाहित्यपरिषद्ग्रन्थागारे संरक्षितम ।

[1] Notices of Sanskrit Mss. (H. P. Sastri), Vol. 1, p. XXXIX.

परम् इदम् अतीव दुःखकारणं यदिदं काव्यरत्नम् अपूर्णं वर्तते। आकृत्या आय-व्ययलिपितुल्ये कस्मिंश्चिद् ग्रन्थे (खाता इति यस्य वङ्गभाषा) क्रमम् अनपेक्ष्यैव यदा यच्चिन्तितं तदा तल्लिखितम्। अत एव श्लोकानां क्रमाङ्को, ग्रन्थस्य पत्राङ्कश्च न स्तः। अन्यच्च ग्रन्थेऽस्मिन् वकदूतीयाः कविता विहाय सन्त्यन्येऽपि केचन श्लोकाः, ये व्यक्तिविशेषाणाम् अभिनन्दनादिरूपाः, उपायन्तराभावाद् अर्थत एव ते विवेक्तव्या जाताः पाठकानाम्।

यद्ययम् एक एवादर्शोऽस्य दूतकाव्यस्य स्यात् तदा त्विदं निश्चितम् एव यद् इदं काव्यं कविना समापयितुं न शेके इति। किं बहुना, कविना अयम् आदर्शो द्विरपि न दृष्ट इत्यपि स्थितम् एव। अत एव केचन सुत्यजा अपि प्रमादा अत्र कृतपदा दृश्यन्ते। क्वचित् पुनः श्लोको वा वाक्यं वा द्विस्त्रिरपि लिखितम्। दूतकाव्यमपीदं कविना सर्गबन्धेन कृतम् इति तल्लेखादेव विज्ञायते। तथा च प्रथमसर्गान्ते एवं लिखितम्—

इति श्रीकविभूषणकृतौ वकदूतकाव्ये नवद्वीपप्रवेशो नाम प्रथमःसर्गः॥

इति। अयञ्च कविभूषणो महामहोपाध्यायाद् अजितनाथन्यायरत्नाद् अभिन्न इति तु वकदूते तत्कृतमायापुरस्थजगन्नाथभूस्तुत्यन्तिमश्लोकाद् विज्ञायते। तथा च तत्र

अजितनाथनिजाननकाननाद् उदलसत् कविता-कुसुमावली।

इह न चास्ति रसो न च सौष्ठवं भवति येन शचीसुत ते रतिः॥ इति। द्वितीयादिसर्गसमाप्तेर्वार्तापि नोपलभ्यते। प्रथमसर्गे एकपञ्चाशत् श्लोकाः। अत्रादर्शे प्रायेण सार्धद्विशतं श्लोका वर्तन्ते। अत्र द्वे शते प्रायेण दूतकाव्यीये, शिष्टा अवान्तराः।

आदर्शस्य प्रथमपत्रं नास्तीति द्वितीयपत्रगतात् सप्तदशश्लोकाद् अस्यारम्भः संवृत्तः। अतएव कस्मात् स्थानाद् वकोऽयम् आगतः केन कथं च दूतीकृत इत्यादिरूपो विशेषो नावधारयितुं शक्यते। श्रूयते कृष्णनगराख्यस्थानादयं प्रस्थाय नवद्वीपे यात्रां समापयत्। एषापि किंवदन्ती यत् वकम् इमं दूतरूपेण अन्यत्रापि प्रेषयितुं कवेरभिप्राय आसीत् परं हितैषिणां केषाञ्चन सुहृदाम् अनुरोधेन कविरयं तस्माद् निववृते इति। समाजसंस्कारार्थं कविरिदं काव्यं चकारेत्यपि ज्ञायते, ततश्च स्वाभाविकतयैव अत्र समाजस्य नानामुखीनाया दुर्नीतेरुद्घाटनं कविना करणीयं, कृतञ्च ; यदीतोऽप्यधिकं स्थानं दूतोऽयं भ्रमेत् तदाऽधिकतयैव दोषोद्घाटनं स्यात् ततश्च तत्संसृष्टानां जनानां जायमानो महान् विक्षोभः कवेर्निरापत्ताया व्याघातं मा जीजनदिति वन्धूनाम् अनुरोधार्थः। वस्तुगत्यापि तथा दृश्यते। कविरयं स्थानानां वा जनानां वा समाजस्य सम्प्रदायस्य वा यावती निन्दा कृता न तावती प्रशंसेति युक्तम् एव तस्याल्पेन विरमितुम् इति।

यद्यपि केनायं दूतीकृत इत्यस्य निर्णयः कोऽपि नाधिगम्यते, तथाप्यनुमीयते कयापि मधुकर्या केनापि कारणात् प्रोषितस्य स्वप्रियस्य भ्रमरस्य अनुसन्धानार्थं वकोऽयं दूतः कृत इति। तथा च उपलभ्यमानानां श्लोकानाम् आदिभूते सप्तदशश्लोके—

> तस्यामेवं नृपतिगुरुभिः प्रार्थ्यमानः परेद्यु-
> र्वामे कुर्वन् सङ्कसहितां साधनाख्याञ्च पल्लीम्।
> तेभ्यः कृत्स्नं प्रियमधुकरस्यानुसन्धानमेत्य
> मन्दं मन्दं व्रज सुरधुनीमुक्तखाताध्वना त्वम्॥

इत्यत्र "प्रियमधुकरस्य" इति पदं प्रियमन्वेषयितुं वकं दूतं प्रहितवतीं

भ्रमरयुवतिम् अनुसारयति । परं तस्याः किमपि वक्तव्यम् अत्र नाभिगम्यते, केवलं नामनिर्देशः सन्दृश्यते । एवञ्च इयं स्थूला काव्यसमालोचना—

१ । काव्यमिदम् असम्पूर्णम्, आदिः लिखितोऽपि नोपलभ्यते ।

२ । सामाजिकं विषयम् अधिकृत्य लिखितमिदं पथिवर्णनायाम् एवो-न्नीतम् ।

३ । वको दूतः, सन्देशिका भ्रमरी, भ्रमरः सन्देश्य इति ।

इदानीमस्य कवित्वम् अधिकृत्य किञ्चिदालोच्यामः । ग्रन्थकृदयं वस्तुतः स्वभावकविरित्यत्र न काचिद् विप्रतिपत्तिः । इदानीन्तनकविषु अविरल एवास्य प्रतिपक्ष इत्यपि नातिशयोक्तिः । यद्यप्यस्य अलङ्कारेषु महान् आदरो न दृश्यते तथापि श्लेषानुप्रासानां निपुणतयैव कविना कृतम् इति लक्ष्यते । वङ्गभाषान्यभाषयोर्मिश्रणेन तत्र तत्र भाषाश्लेषोऽपि कविनादृतः । अर्थावृत्त-श्लोकावृत्त्यादियमकं तथा विरोधाभासश्च ग्रन्थेऽस्मिन् न विरलः । व्याजस्तुतौ पुनः कवेरस्य अनितरसाधारणोऽधिकारस्तत्र तत्र दृश्यते । तादृशाः केचन श्लोका उद्ध्रियन्ते । तत्र विल्वपुष्करिण्याख्यस्थानगमनप्रसङ्गेन लिखितम्—

पातुं वाञ्छा यदि तव जलं विल्वपुष्करिण्या
आकाशात् त्वं न नम खग ते निष्फलो यत्न एषः ।
वङ्गेष्वेकं मरुपुरमिदं बुद्धिमन्नित्यवेहि
तत्रत्या नो पथिकनिचये विन्दुमात्रं त्यजन्ति ॥

सहजसरलया भाषया कृतोऽयं विल्वपुष्करिण्यास्तिरस्कारः सहृदयानां हृदय-तस्कर एव सञ्जातः । एवं मायापुरवर्णनावसरे—

प्राचीनेयं द्विजवर पुरी यत्र वल्लालसेन-
कीर्तिर्व्यापी गिरिरिव लसद्भग्नसौधावशिष्टम् ।

सोऽयं जयनारायणः पथिगमनादिकालेऽपि न्यायशास्त्रीयं तत्त्वं मनस समालोचयन् बभूवेति प्रत्यक्षदर्शिनां वादः, अत एवोक्तं कविना 'अतिक्रम्य न्यायं पदमपी'ति। पक्षे न्यायं नीतिमित्यर्थः। 'पवर्गप्रेमार्थी'त्यस्यायम् अर्थः—स किल जयनारायणः काशीवासं सङ्कल्प्य गृहात् प्रस्थाय मोक्षपुरं वाराणसीम् एव पूर्वम् आशिश्राय, अन्ततश्च धनलोभेन तां विहाय नव द्वीपाधीशस्य सभास्तारताम् आवभारेति, अत उक्तं 'स जहदपवर्गप्रदभुवम् इति। 'महेशं सोपाधिम्' इति न्यायरत्नोपाधिकं महेशं महेशचन्द्रन्यायरत्न नामकं कलिकातासंस्कृतमहाविद्यालयस्य तदानीन्तनाध्यक्षमित्यर्थः। 'निरु पाधौ' इति शिवे इत्यर्थः।

नवद्वीपस्य पौरशासनव्यवस्था (मिउनिसिप्यालिटि) इत्थं वर्णिता—

कूपाः कुत्र च कुत्र वा प्रतिपथं प्रस्रावधारागृहं
आलोकान्तरदृश्यदीपकमणिस्रग्भिर्निशाऽलङ्कृता।
रोगोन्मुक्तनरास्थिसारतनुवन्मार्गोऽपि पक्वोऽभवत्
सन्तोमीनिशिपालशासितपुरे वासे तु भङ्गापदः॥

अत्र चतुर्थचरणे सन्तो मीनिशिपालशासितपुरे इत्येकत्र छेदव्यवस्था 'मीनिशिपाल' इत्याङ्गलभाषानुकरणेन पौरशासनसमितेर्नाम। अन्यत्र सन्तः अमी निशि इति च्छेदः।

पौरशासनस्य पदाधिकारसम्मतिम् (भोट) अधिकृत्य कविना लिखितम्-

मतिर्विधेया भवता नभोटे विना विमानं सुलभः स पक्षिन्।
विमानमाप्यापि नभोटतृष्णां कति त्यजन्तीति विचित्रमत्र॥

अत्र नभोटे इत्यस्य आकाशाटने इत्यर्थः, पक्षे न 'भोटे' इति छेदः। भोटपक्षे विमानपदद्वयस्य एकत्र विशेषमानः परत्रापमानोऽर्थः। अर्थान्तराणि पाठकैः स्वयमूह्यानि।

अन्यत्रापि—

सन्ति द्वादशमन्दिराङ्कितपदे वैरागिरामागिरा
वक्तुं तत्सुखमक्षमः कविरिह ब्रह्मापि लीलायते ।
वाजारः सुलभः सुरालयशतं यत्राभितः शोभते
भूलोके शिवभूरतः सुरतरङ्गिण्या विलासालयः ॥

अत्र प्रथमपादे वैरागिरामा गिरा इति छेदः, वैरागिणां रामा रमण्यः वैरागिण्य इत्यर्थः । वैराग्यार्थक-वैरागपदाद् अस्त्यर्थे इनप्रत्ययेन वैरागिपद-सिद्धिः । पक्षे वैरागिरा मागिरा इति छेदेन वङ्गभाषास्वरससिद्धः स एवार्थः । वाजार इति वङ्गभाषाप्रसिद्धो विपण्यर्थकः शब्दः । पक्षे वा जारः इति छेदः । सुरालय इति प्रसिद्ध एव श्लिष्टः शब्दः । चतुर्थचरणे अशिव-भूरिति च विभागः । सुरतरङ्गिण्या इति गङ्गायाः कामोन्मत्तायाश्चेत्यर्थ-द्वयम् ।

इदानीमस्य यमकचमत्कारितां काञ्चन प्रदर्शयामः । तत्र चिकित्सकान् अधिकृत्य—

केऽपि भद्रमुखाः सन्ति द्विजराजचिकित्सकाः ।
केपिभद्रमुखाः सन्ति द्विज राजचिकित्सकाः ॥

इति कविना कृतं पादावृत्तियमकं व्याख्यानं विनैव प्रायः सर्वेषां हृदयङ्गमम् इत्यहो नैपुण्यं महाकवेः । अत्र तृतीयचरणे आङ्गलानुकरणेन नामान्त-र्गतयोरवान्तरपदयोः आद्याक्षरानुसन्धानं कविना कृतम्, एवं च के. पि. भद्र इति चिकित्सकस्य साङ्केतिकंनाम सम्प्राप्तम् तस्य च कालीपदभद्रो वा काली-प्रसन्नभद्रो वा कृष्णप्रसन्नभद्रो वेत्यादि सम्पूर्णं नाम द्रष्टव्यम् ।

पौरसभासदस्यानां कर्माणि साधिक्षेपम् आविष्करोति—

कैश्चिद् वानरकायपातनकरी श्रामोन्नतिः साधिता
कैश्चिद् वा नरकाय पातनकरी श्रामोन्नतिः साधिता ।
कैश्चिद् वा नरकायपातनकरी श्रानोन्नतिः साधिता
कैश्चिद् वा नरकाऽयपातनकरी श्रामोन्नतिः साधिता ॥

इति । महायसकल्प अस्य यथाविहितच्छेदानुसन्धानेन अर्थभेदः स्वयम् आविष्कुर्वन्तु सुधियः । चतुर्थचरणे नर एव नरक इति स्वार्थे कः, तेषाम् अयस्य शुभावहविधेः पातनकरीत्यर्थः । एवं "सद्गौरविग्रह इह प्रविभासि तत्त्वं" इत्याद्यपि महायसकल् अत्र कृतपदं कवेर्नैपुण्यं प्रख्यापयति

श्लेषव्याजस्तुत्याद्यलङ्काररम्यया लेखन्या कविना लिखिताः प्रायः सर्व एव श्लोकाः सहृदयहृदयहारिणः सञ्जाताः । प्रभूतया प्रतिभया भासुरस्यास्य स्वभावकवेः कोऽपि लेखो जटिलतां नाधत्त ; स्थितेष्वपि श्लेषादिवदतिगम्भीरार्थेषु अलङ्कारेषु श्लोकार्थविज्ञानार्थं नान्य उपसर्पणीयः पाठकैः । असम्पूर्णतया अस्य प्रकाशोऽनुचित इति दूयमाना वयम् अत्र त्यान् कांश्चन श्लोकान् समुपहरामः । तत्र प्रथमपत्रस्यानुपलम्भाद् द्वितीयपत्रादेरेव श्लोकाः संगृह्यन्ते अस्माभिः ।

तस्यामेवं नृपतिगुरुभिः प्राप्तमानः परेद्यु-
र्वामे कुर्वन् सड़कसहितां साधनाख्याञ्च पल्लीम् ।
तेभ्यः कृत्स्नं प्रियमधुकरस्यानुसन्धानमेत्य
मन्दं मन्दं व्रज सुरधुनीमुक्तखाताध्वना त्वम् ॥१७॥

गच्छत्येवं सुजननगरी सम्मुखस्था क्रमेण
शीर्णां जीर्णाकृतिमिव कुटीमिन्द्रचन्द्रस्य कीर्तिम् ।
दृष्ट्वा तस्यां खगकुलपते मैत्रकृत्यं समाप्य
स्वस्थः स्वस्थः पुनरट पथा विल्वयुक्पुष्करिण्याः ॥१८॥

पातुं वाञ्छा यदि तव जलं बिल्वपुष्करिण्या
आकाशात् त्वं न नम खग ते निष्फलो यत्न एव ।
वङ्गेष्वेकं मरुपुरमिदं बुद्धिमन्नित्यवेहि
तत्रत्या नो पथिकनिचये बिन्दुमात्रं त्यजन्ति ॥१९॥
यायाः मायापुरमिदमितो दक्षिणे यद्यपि त्वं
लब्धा नैवं त्रिदशसरितो दुर्लभं दुष्कृतानाम् ।
यस्मिन् यत्नाद् बक मकरलावैस्सार्वैः पुण्यशीलै-
राविश्चक्रे खग नव-नवद्वीपधाम द्वितीयम् ॥२०॥
प्राचीनेयं द्विजवर पुरी यत्र बल्लालसेन-
कीर्तिर्वापी गिरिरिव लसद्भग्नसौधावशिष्टा ।
अद्याप्यास्ते यवनबहुला दीर्घकालक्रमेण
सोल्लापल्लीत्यभवदधुना सानुमेया पुरीयम् ॥२१॥
सम्भूयात्र प्रयतचरितः कान्तकारुण्यमूर्ति-
र्भक्तिं जाम्बूनदतनुरुचिश्छन्नकायश्चिकाय ।
श्रीगौराङ्गः किल कलिमलक्षालनक्षामकृत्यैः
श्रीवासाद्यैरिह परिकरैर्मर्त्यलीलां तनोति ॥२२॥
तत्राकाशात् खगवर भवान् भूय एवावतीर्य
श्रीचैतन्यं नवसमुदितं पश्यतु प्रेमदृष्ट्या ।
भक्त्या स्तोतुं प्रणिहितमना भुक्तभूरिप्रसाद-
स्तिर्यग्योनिं सफलय पतं स्तारकब्रह्मबन्धोः ॥२३॥
नानाच्छन्दोविरचिततया पुष्पमालासमानैः
पुण्यश्लोकैरभिनवकविप्रस्तुतैः स्तोत्रराजैः ।
संस्तोतव्यः पतग भवता भक्तितो भक्तिदाता
श्रीचैतन्यो विधुरिव रसादेष मायापुरेशः ॥२४॥

কৃত্বা কাঞ্চনশৈলসোদররুচিং মূর্তিং জগন্মোহিনীং
বিশ্বগ্ বিশ্বহিতায় বিশ্বপতিনা নিঃস্বৈকনিস্তারিণা।
নানাশাস্ত্রসমুদ্রসার-পরমপ্রেমামৃতস্রোতসা
সানন্দং নিরমায়ি নীরস-নবদ্বীপো নদীমাতৃকঃ ॥২৫॥

বৃন্দারণ্যবিহারবিভ্রমহরিশ্চৈতন্যচন্দ্রাখ্যয়া
খ্যাতঃ শ্রীপতিরত্র ভূপতিরভূন্নির্মায় মায়াপুরম্।
রে নাস্তিক্যকুতর্কিবঞ্চকচয়া ন স্থাতুমত্রোচিতং
নো বাধন্তু মদোত্কটা যমভটা দূরং প্রয়ান্তু দ্রুতম্ ॥২৬॥

যত্কণ্ঠোত্থহরিধ্বনিশ্রুতিভিয়া বিদ্রাতি মায়ামৃগী
যস্তাপত্রয়তারণেন জগতি প্রাপ্তঃ প্রতিষ্ঠাং পরাম্।
চিত্রং সম্প্রতি কৃষ্ণভক্ত-সুজনাত্ প্রাপ্তপ্রতিষ্ঠঃ স বৈ
শ্রীচৈতন্যদয়ানিধির্বিলসতি স্বল্পোঽত্র মায়াপুরে ॥২৭॥

তচ্চৈতন্যপদং পরিস্ফুরদিদং পদ্মং ন দৃশ্যং মম
মিথ্যাদৃষ্টিরহো খপুষ্পসুরুচের্মুক্তা সুনীতির্ময়া।
তন্মায়াখ্যপদুদ্যতাং ভগবতা ত্বঙ্কে জগন্নাথভূ-
র্হে চৈতন্য ময়ি প্রসীদ চরমে মায়ানুমেয়া ন বা ॥২৮॥

কৃষ্ণান্তর্বহিরেষ গৌরতনুভৃত্ সংসারসারগ্রহো
ভক্তার্থং শ্রুতিদুষ্টকার্যশতকৃন্মুগ্ধো বিপক্ষাশ্রিতঃ।
মায়াম্ভো বিচরন্ মহাপ্রভুরসৌ নীচোপদেশপ্রিয়ো
ব্রহ্মন্ মানসহংস এষ কৃপয়া তত্পাশতো মুচ্যতাম্ ॥২৯॥

কর্ণঃ কৃষ্ণপরাঙ্মুখো জড়তয়া কল্পোঽনুকল্পঃ কিয়ান্
নো চিন্তামণিরত্র কর্কশতয়া সা কামধেনুঃ পশুঃ।
তস্মাদ্বর্গচতুষ্টয়াধিকদদচ্চৈতন্যচন্দ্রং বিনা
প্রেম্ণা পামরপালনক্ষমমহং লোকে ন লোকত্রয়েঽ ॥৩০॥ ইতি।

रूपं स्वर्णानुरूपं विदधदिह गयागङ्गया सेविताङ्घ्रिः
कृष्णः सम्भूय भूयो भुवि विमलकुले गौरवर्णो विवर्णः।
स्मारं स्मारं प्रियर्णां युगनयनगलद्वारिधारावरोऽयं
तीर्थं तीर्थं सतीर्थैरटति रटति हा राधिका राधिकेति ॥३१॥
लोकान्तस्तिमिरान्तकृद् भवसुहृन् कान्तः कलासंहते-
र्यः पूर्णोऽमृतदो भवन्निह भवे नित्यं नवद्वीपराट्।
सोऽयं पुण्यतमः समर्दिततमा मे कृष्णपक्षोदयो
हृत्पद्मे समुदेतु चन्द्रविजयी चैतन्यचन्द्रः परः ॥३२॥

सच्छास्त्रकाननगतैर्गुरुसौम्यकाव्यैः
सालङ्कृतं श्रुतियुगञ्च सुवर्णपुष्पैः।
हे गौर गौरवपुषः पुरुषोत्तमस्य
मन्दारकूटकविता किमलं करोति ॥३३॥

×          ×          ×          ×

एवं स्तुत्वा सविनयमथो दण्डवत्तं प्रणम्य
पीत्वा तोयं हरिचरणजं भुक्तभोगप्रसादः।
किञ्चित् कालं विरम कतिचिद्वृक्षमाश्रित्य कामं
सायंकाले खगवर नवद्वीपधाम प्रयाहि ॥३७॥
अन्यत् किञ्चिन्मनसि यदि ते तारकब्रह्मबन्धु-
र्बन्धुप्रीत्या खग तव मनोऽभीष्टमिष्टं प्रयच्छेत्।
एवं मायापुरपरिसरे प्राप्तभोगो नभोग
तस्मात्तूर्णं व्रज सुरधुनीं याति चास्तं विवस्वान् ॥३८॥
स्थानादस्मात् पतग भवतो दक्षिणास्यस्य दक्षे
पूर्वस्थल्यां निवसति महान् पण्डितः कृष्णनाथः।

सन्ध्याकालः समुदित इति त्वं विलम्बासहिष्णु-
र्दूरादेव प्रणम मनसा न्यायपञ्चाननं तम् ॥४०॥

भद्रावासां भुवनविदितां भूभुजां माननीयां
तीर्त्वा गङ्गां व्रजतु नगरीं श्रीनवद्वीपनाम्नीम् ।
जाने नेयं पतग भवतः प्रीतिदाऽप्रीतिदा वा
नव्याकारा नवगुणयुता नव्यनामाङ्कितेति ॥४२॥

वाचां देवी प्रियतमसुतैर्यत्र लीलां व्यधत्त
श्रीगौराङ्गप्रियपरिकरास्तत्र लीलां चरन्ति ।
शास्त्रालापैः पथि पथि बुधा यत्र नित्यं विचेरुः
स्थाने तस्मिन् गुनगुनरवैर्भक्तभृङ्गाश्चरन्ति ॥४४॥

नवद्वीप-दीपे नृपस्नेहहीने सपत्नीर्ष्ययेव श्रियो यान्ति हीने ।
वचो देवता तद् विलोक्य स्वधाम ययौ दीप्तिहीनं नवद्वीपधाम ॥४८॥
सुराजी विशाला सभावात्र दृश्या सुराजीविशाला सभावाल दृश्या ।
नवद्वीपगोस्वामिनो वा प्रतापो नवद्वीपगोस्वामिनो वा प्रतापः ॥५०॥

आविर्भावो वैष्णवानां तिरोभावः सतामिह ।
महान्तो वैष्णवा यत्र सन्तोऽकिञ्चनतां गताः ॥५१॥

इति कविभूषणकृतौ वकदूतकाव्ये नवद्वीपप्रवेशो नाम प्रथमः सर्गः ॥

प्रातः शङ्खमृदङ्गवाद्यकुशलै रागैश्च कालोचितैः
प्राच्यैः श्रीहरिनामकीर्तनपरैर्वन्दारुभिर्वैष्णवैः ।
प्रत्यूषे सुखनिद्रितस्य भवतो भव्यः प्रबोधो द्विज
प्रातःकृत्यमथो समाप्य च नवद्वीपाटनाय व्रज ॥

विदग्धजननी सभा पुरत एव ते राजते
महेन्द्रभवने भवान् व्रजतु चेद्दिदृक्षा खगः ।
महोपकृतये महाजनपदेऽत्र संस्थापिताम्
अशेषबुधमण्डलीपरिवृतामुपाधिप्रदाम् ॥
साक्षात् कल्पतरुर्धिया सुरगुरुर्भूत्या च यक्षेश्वरो
विद्यारत्नसमाख्य एष रजनीकान्तो महेशानुगः ।
पद्मापारनटाकलास्वविषयं पद्माजले मज्जयन्
अत्रास्ते वक तीर्थभूरिति कियद्युक्त्वा व्रजास्यान्तिकम् ॥
गोत्रं नाम त्यजन्तो गतयमनियमा अत्र संयोगिवाच्या
येषां शश्वत् परासु प्रकृतिषु सहजा [:] प्रीतयो वैष्णवास्ते ।
भक्त्या भोगैरहीना गुरुनियमरता भेकभाजो विरक्ता
नानावर्णैर्विचित्रं द्विजतिलक नवद्वीपचित्रालयेऽस्मिन् ॥
देवीप्रसन्नो गिरिजाप्रसन्नो दक्षप्रसन्नोऽथ सतीप्रसन्नः ।
एतैः प्रसन्नैः परिभूषितापि विना प्रसन्नादियमप्रसन्ना ॥
श्रीगौराङ्गसभा पुरः स्फुरति ते गोस्वामिभिः स्थापिता
तां गत्वा परमार्थयुक्तललितव्याख्यानमाकर्ण्यताम् ।
गौराङ्गाश्रितवावदूकमुखतः श्रुत्वाथ सद्वक्तृतां
गौराङ्गालयमाशु गच्छतु ततः संगृह्य किञ्चित् खग ॥
अत्र श्रीमतिरायनाम सुकृती वारेन्द्रवंशोज्ज्वलो
यात्रार्थं निजजन्मभूमिमतुलां यो भक्तशालां जहौ ।
प्रोद्गायन्ति यशांसि यस्य मनुजाः सर्वत्र भूमण्डले
सङ्गीतैर्नव कापनाम सुबृहन्नेतः परं वापि कः ॥

आकाङ्क्षा जगतां जनस्य नियता यस्यास्ति यात्राश्रुतौ
योग्यत्वात् क्षितिपैः सुवर्णपदकैः सम्मानितो योऽभवत्।
आसक्तिः सततं बृहस्पतिसमैः प्राज्ञैरसंख्यैः समं
तद्गानं यदि शाब्दबोधरहितं तच्छास्त्रकारभ्रमः ॥

साहित्यस्मृतिशास्त्रपारगतया यो नव्यकव्यग्रणीः
सा वाणी रसभावभासुरगतिः सद्वृत्तवर्णोज्ज्वला।
लक्ष्मीकान्तमपोज्झ्य नूतनरुचिर्यत्कण्ठमाशिश्रिये
सोऽयं श्रीशितिकण्ठनामककविर्वाचस्पतिर्वीद्यताम् ॥

आशावानाशुतोषो विविधगुणगणै राजितो राजभक्तो
निद्रासुक्तो विचारे प्रमुदितहृदयः सारवस्तुस्वनेन।
आहूतो येन केन प्रचलति सजवस्तत्समीपं भियेव(?)
एतद्राज्ञः सभायां वकवर तनुते सारमेयस्य वृत्तिम् ॥

कण्ठस्थं दशकर्म यस्य मतिमान् यो वेद वेदत्रयं
येनाद्याप्यनुभूयते हृदि चिरं शार्दूलविक्रीडितम्।
सोऽयं श्रीमतिलालनामककृती वक्ता पुरोधाः सतां
तीर्थप्राप्तिनिमित्तकं यदि कियत् कुर्यास्तदामुं स्मर ॥

प्रसिद्धाख्यभ्रातृद्वयभजनवद्भक्तनिवहे
कदाचारं स्मारं स्फुटमजितनाथो जितरिपुः।
नवद्वीपं हित्वा नवनृपमुदे कृष्णनगरे
निराकारां कालीं कलयति स कौलव्रतधरः ॥

चारुश्रीर्नियतं क्षितीशभवने यश्चारुशिक्षाप्रद
एकान्ते च निरञ्जनं कलयति प्रायः समाधिं भजन्।
आयश्चिच्चविवेकतत्त्वकथया प्रीणाति यश्चातिथीन्
सोऽयं किं शुक एव नारद उत व्यासो वशिष्ठो गुरुः ॥

नारायणः सदाचक्री कृष्णो चक्रः सुदर्शनः ।
चक्रवर्ती सार्वभौमश्चक्रहीनः सदाशिवः ॥

गोस्वामिनः प्रियसदा बलिदानवार्ता
मालाधरा बलिरुचः श्रितकृष्णपद्माः ।
वाह्येऽपि काञ्चनरुचिं दधतोऽन्यथान्त-
रेने महाप्रभुरुचोऽस्य युगावताराः ॥

निजं धाम प्राप्ते हरिहरमुखे देवनिवहे
नवद्वीपारण्ये नियतमशरण्येऽन्यदमसि(?) ।
अमीमांसास्वादा रजनिचरपञ्चाननगणाः
प्रमत्ताः प्राधान्यात् पशुषु निजमूर्तिं विदधति ॥

नन्दी रक्षति नन्दनस्य विभवं सार्धं गणैः सर्वदा
भृङ्गी गायति चित्रगुप्तगहने त्यक्त्वा विषादं मुदा ।
श्रीपञ्चाननभूतभीतवृषभः श्रीयोगनाथः शिवो
नित्यानन्दमुखं विलोक्य सहते घोरां वियोगव्यथाम् ॥

ग्रामस्यान्तर्गिरिशिखरवद् राजतो मन्दिरे द्वे
तारामूर्तिर्विलसति तयोरेकतोऽन्यत्र शम्भुः ।
वामे कृत्वा निजपतिशिवं दक्षिणे ताञ्च तारां
मध्यस्थाने वटतरुतले राजते सा परा मा ॥

प्राचीना याः परिचितमुखस्ताः समस्ताः पयस्थाः
प्राचीना ये परिचितबुधास्तेऽपि लोकान्तरस्थाः ।
ग्राम्या देवी सकलशरणं या परा मा प्रसिद्धा
दृष्ट्वा कष्टं भुवनजननी सा विदग्धा शुचेव ॥

उदाहरणार्थम् उदारार्था एते श्लोकाः क्रमम् अनपेक्ष्यैव भवतां पुरतः संस्थापिताः। पूर्वमेव लिखितम् आदर्शस्य पत्राङ्काभावाद् उभयतः पार्श्वयोर्लिखनात् श्लोकाङ्काभावाच्च पौर्वापर्यनिर्धारणं प्रसङ्गसाङ्गत्यञ्च नितराम् अप्युकरं वर्तते इति। दृश्यताम् एकम् उदाहरणम्। अस्मिन् नवद्वीपवर्णनोपक्रमे एवैते श्लोका एकस्मिन् पृष्ठे लिखिता दृश्यन्ते—

केदारनाथहरिमाधवभक्तिभृङ्गैर्वैराग्यवर्त्मनि गतैः सुमनोभिरेतैः।
नामस्वरूपमपिधाय विनोद्य मायां गौराङ्गसंक्रमपथः सुरभीकृतोऽद्य॥

अत्युग्रापि शिवाय या त्रिजगतां तारा प्रसादाश्रया
आकारेण चतुर्भुजाप्युदरपूर्त्यर्थं विहस्ता सदा।
गीर्वाणाभयदा गिरीशमहिलाऽप्येषा गिरीशात्मजा
मातानन्दमयीह कृष्णनगरस्याधीश्वरी दृश्यताम्॥

श्रीशादिभूपतिचतुष्टयतुष्टकारी भूपासनाशनविभूषणवेषवेदी।
विश्वासभूः क्षितिपतेर्हितकृत् पुराणो वाचाकरः पतितपावनघोष एषः॥

एषु मध्यमस्य श्लोकस्य कृष्णनगरसम्बन्धिता कण्ठोक्त्यैवोपलभ्यते, परम् इतरौ किं नवद्वीपसम्बन्धिनौ आहोस्वित् कृष्णनगरसम्बन्धिनाविति संशयः। एवंविधेषु स्थलेषु, यद्वा काव्यस्यास्य प्रायः सर्वत्रैव, वर्णनीयानां देशकालपात्रादीनां विशेषविज्ञानं विना अर्थाद्यवगमो दुष्कर इति सप्रश्रयं निवेद्य अत्रैव विरम्यते।

---

## हंसदूतम् (२)

अस्य बङ्गानुवादः श्रीदीनेशचन्द्रसेनसङ्कलिते(1) बङ्गीय-साहित्य-परिचयग्रन्थे ( पञ्चाशदुत्तराष्टशततमपृष्ठादिषु ) संदृश्यते । एतत् दूतकाव्यं खीष्टीयसप्तदशशतके नरसिंहदासेन बङ्गभाषापद्यमध्ये न रूपान्तरीकृतमासीत् । अतः ग्रन्थोऽयं खीष्टीय-सप्तदशशताब्द्याः प्रागेव रचित इति निःसन्दिग्धमेव । एतस्य ग्रन्थस्य कालक्रमेण लोपात् बङ्गभाषापद्यानुवादमाश्रित्यैव अस्माभिः अत्र सन्देशविषयादिकमुच्यते । वक्तव्यविषयस्तु रूपगोस्वामि-कृतहंसदूत इव कृष्णप्रेमसम्पर्कित एव । राधाया मूर्च्छानन्तरमत्रापि ललितया वृन्दावनतः कृष्णसकाशं हंसो दूतत्वेन संप्रेष्यते । कृष्णविरहितानां भृशं क्लिष्टानां गोपीनां, विशेषतो राधाया दुःखवर्णनमेव हंसदूतेन नितरां करणीयम् एषैव याच्ञा गोपीनाम् । यथा नरसिंहदासेन बङ्गभाषयानूद्यते—

ब्रह्मार वाहन तुमि तोरि निवेदिये आमि
कृपा करि करह आरति ।
दुःखेर वारता लया कहगा श्यामेरे याच्या
वनवासी हल कुलवती ॥
तोमा सङ्गे प्रीति करि यत गोप किशोरी
कुलशील सब तियागिया ।
सुधाइबे यतन करि कि दोषे छाडिले हरि
देखा देह बारेक आसिया ॥

---

(1) D. C. Sen's Vangiya-Sāhitya-Paricaya p. 850.

अग्रहायणमासतः आरभ्य कार्त्तिकमासपर्यन्तं विरहिणीभिः गोपीभिः सोढं दुःखमधिकृत्य रचिता कविवर्येण रघुनाथदासेन काचन "वारमास्या"।

मनेर ये दुःख यत ताहा वा कहिव कत
कहिते मरमे लागे व्यथा।
पीरीते छाड़िले घर तनु हइल जरजर
भाविते गुणिते गुणकथा॥
बार मासेर यत दुःख कहिते बिदरे बुक
गुमड़ि गुमड़ि उठे प्राण।
विधि कैल अबला ताहे सहे एत ज्वाला
पीरिति विषम बलवान्॥
विरह यातना कथा हंसे कहे श्रीललिता
आपनार विरह कारण।
जनम गोङाव सुखे कखन ना पाव दुःखे
एके एके शुन विवरण॥

ग्रन्थेऽस्मिन् दूतस्य हंसस्य गमनपथः साधु विव्रियते (op. cit. pp. 859-860)

———

वङ्गीयदूतकाव्येतिहासस्थपद्यानाम्

## अकारादिक्रमसूची

# Bibliography

(With description of Manuscripts used for the preparation of this work).

Anila-dūta by Rāmadayāla Tarkaratna. Available only in MS. in fragments. See Pracyavani Sans. MSS. Collection of Sanskrita Duta-Kavya-mālā, No. 142 (1).

Bhakti-dūta by Kālīprasāda. Vida Notices of Sanskrit MSS., R. L, Mitra, vol. III, p. 27.

## No. 1051. भक्तिदूती।

Substance English paper, 13½×4 inches. Folia 4 Lines, 6 on a page. Extent, 69 Slokas. Character Bengali Date? Place of deposit, Navadvipa, Vrajanath Vidyāratna. Correct.

Bhaktidutī. A poem in praise of devotion to Kṛṣṇa, and the means of attaining it. By Kālīprasāda Śarman.

Beginning :—

नत्वा श्रीनाथपादाम्बुजमतिरुचिरं भोगमोक्षैकहेतुं
नित्यानन्दप्रबोधं सकलसुरनरैः सेवितं तत्त्वसारम् ।
श्रीमान् कालीप्रसादो द्विजकुलवरजो मुक्तिकान्ताभिलाषी
भक्तिं दूतीं हितज्ञां रचयति चतुरां चारुशीलां मनोज्ञाम् ॥१॥

End रमणिरपि परा भक्तिदूत्या समाप्ता ॥२३॥

Bhramara-dūta by Rudra Nyāyavācaspati. Edited by Dr. J. B. Chaudhuri as vol. I of Saṃskṛta-dūta-kāvya-Saṃgraha. Calcutta, Prācyavāṇī Mandir, (3, Federation Street, Calcutta).

1940. For a detailed discussion about the work, its author, etc., in English, see the Introduction to this volume, pp. 9-23.

Candra-dūta by Kṛṣṇa Tarkālaṅkāra. Available in MS. only. Vide Notices of Sanskrit MSS, by H. P. Shastri, vol. II, p. 50, MS. No. 61. Extent in Ślokas 112. Folios 14. Lines 4 on a page. Paper 14×3 inches. Date unknown. The moon is sent here as a messenger by Rāma to Sitā. The 2nd verse is as follows :—

नायं शूरः कुवलयवपुर्न स्मरः स्वङ्गलक्ष्म्या
मारप्रादुर्भवनवचनो न स्मरारि.........
न प्राणेशीसुवदनशशी दूरगो यन्....
जाने प्राणप्रणयविकली दुःखशङ्की शशाङ्कः ॥

End of the MS. :—

इति निगदितवाक्यः प्रेक्षमाणः शशाङ्कं
मदनशरहताङ्गो वह्निघा रिङ्गमाणः ।
विरहजलधिजेन प्रेमवारिप्रपूर्णो
रघुवरकुलसिंहः क्ष्मातले संपपात ॥
इति कतिपयवेलाः संस्थितो मूर्छितात्मा
किमिति किमिति वाक्यैर्बोधितो लक्ष्मणेन ।
झटिति करिकरौघैः पालिताशाश्च दृष्ट्वा
शिव शिव विदितात्मा जिह्मयामास रामः ॥

Colophon : इति श्रीगोपीकान्तभट्टाचार्यात्मज-श्रीकृष्णचन्द्र-तर्कालङ्कार-विरचितं चन्द्रदूतमहाकाव्यं समाप्तम् ॥

Ghaṭakarpara-Kāvya. Ed. critically by Dr. J. B. Chaudhuri as vol. VI of the Saṃskrta-dūta-kāvya Series from the Prācyavāṇī Mandir 3, Federation Street Calcutta—9, with a Sanskrit Commentary by Dr. Chaudhuri himself, 1953. For all the informations about Ghaṭakarpara, his life and works, date, commentaries on the Ghaṭakarpara-Kāvya by Abhinavagupta, Kamalākara Bhaṭṭa, Gaṇeśa Daivajna etc. etc., see the Introduction to the Ghaṭakarpara-Kāvya in English by Dr. J. B. Chaudhurī, pp. 1—60. The Sanskrit commentary focuses much new light on the right interpretation of the work which is nothing but a Dūta-Kāvya.

Gopī-dūta by Lambodara Vaidya. Available only in MS. Prācyavāṇī Collection of Sanskrit MSS., Sanskrita-Dūta-Kāvya-mālā, No. 142 (2)

Haṃsa-dūta by Raghunātha Dāsa. Available only in Bengail tr. Vide Vangīya Sāhitya-Paricaya, edited by Dīneśacandra Sena.

Haṃsa-dūta by Rūpa Gosvāmin. Edited in the Kāvya-Saṃgraha by Jīvānanda Vidyāsāgara, vol. III, third edition, pp. 441—597, Calcutta 1888. In the Introduction to the Haṃsa-dūta by Vāmana Bhaṭṭa Bāṇa, published as Vol. 4 of the Sanskrita-Dūta-Kāvya-Saṃgraha from the Prācyavāṇī Mandira, a history of all the Dūta-Kāvyas under the name Haṃsa-dūta has been incorporated (pp. 27-43). Here the merits of the Haṃsa-dūta-kāvya by Rūpa Gosvāmin have also been incorporated, see pp. 23-36.

India Office Library Catalogue of Sanskrit and Prakrit Books. By Dr. Pran Nath and Dr. J. B. Chaudhuri. Vol. II, Parts I—III (1938—53).

Kāka-dūta by Gauragopāla Śiromaṇi, son of Dinabandhu Mukhopādhyāya, descendant of Śri Gangādhara Thākura of Panchthupi, Calcutta, 1889.

Kīra-dūta by Rāmagopāla. Available only in MSS. Vide Notices of Sanskrit MSS., by H. P. Sastri, vol. I, p. XXXIX. MS. No. 67.

Begining :—

ॐ नमः कृष्णाय ।

विद्युद्गौरोज्ज्वलनिवसनं शोणपादारविन्दं
बर्होत्तंसं नवजलधरश्याममम्भोरुहाक्षं ।
कूजद्वंशीविलसदधरं सुन्दरं स्मेरवक्त्रं
पूर्णानन्दं किमपि ललितं ज्योतिरालोकयामि ॥
वृन्दारण्ये खगमृगकुलाह्लादशून्ये तटान्ते
भास्वत्पुत्र्या दयितविरहोत्तापसन्तापितानां ।
गोपस्त्रीणां………………दृशां मण्डले दुःखिनीनां
हाहेत्युच्चैः………………नर्मभित् सर्वदासीत् ॥
मध्ये तासामपि च शुशुभे तप्तकार्तस्वराङ्गी
सुश्रोणीनां कमलजदलास्या लसत्कर्णिकेव ।
दीना क्षीणा सजलनयना नीरसा……कण्ठी
मृत्युं नैच्छद्विरहदहनोत्तापतप्ता तदा किं ॥
काचिद् गोपी विनयवचनैः सान्त्वयित्वा मृगाक्षीं
भर्तुर्वार्तागमनसुलभं जीवनं सानुमेने ।
इत्थं चिन्ताकुलितहृदया पक्षिणं कीरमारात्
प्रीत्यापश्यत् सुरसिकमनोहारिणं बिम्बचञ्चुं ॥

प्रत्यूचे तं सुमधुरगिरा प्रीणयित्वा वराङ्गी
कीरास्माकं त्वमतिकुशलो दौत्यकर्मण्युतास्मिन् ।
वन्यस्त्रीणां विविधवचनं त्वन्मुखोद्गीतहृद्यं
श्रोष्यत्येव प्रमुदितमना माधवो यादवाग्र्यः ॥ इत्यादि ॥

काऽहं को वा मम तु दयितो नैव किञ्चित् स्मरामि
ह्येकः कोऽपि स्फुरति हृदये श्यामलाङ्गोऽग्निरूपः ।
कस्माद्धेतोर्दहति स च मां निर्दयः किं करोमी-
त्युक्त्वा भूमौ न्यपतदिव सा संमृतास्पन्दनाडी ॥

कृष्णायावेदयितुमपि तां दुर्दशां तत्प्रियाया
अत्यौत्कण्ठ्यात् झटिति मथुरां नागराय प्रियाय ।
वृन्दारण्याद् व्यथितहृदयो व्यस्तरूपः प्रतस्थे
कीरो धीरः सुस (?) दुपकृतौ दौत्यकर्मैकदक्षः ॥

राधादेवीविरहसहितोपेन्द्रलीलारहस्यं
········नेदं कृतमपि मया कीरदूताख्यकाव्यम् ।
··················प्रभवकविना रामगोपालकेन
प्रेमात्मानोऽमृतमिव सदा सन्त आस्वादयन्तु ॥

दोर्दर्पेण वशीकृताः क्षितिभुजो यस्येह वङ्गावनौ
यस्याशेषगुणप्रदीप्तयशसा प्रच्छादितं क्ष्मातलम् ।
वर्तन्ते परिषत्सु यस्य कवयः श्रीकालिदासोपमाः
काव्यं कीरवचोहरं वितनुते तस्यैकसभ्यो।बुधः ॥

समाप्तोऽयं ग्रन्थः ।

From the above verse, it would appear that the Patron of the Poet conquered some parts of the country & was a great Patron of Learning.

Colophon :

शाके वस्वब्धिशैलक्षितिपरिगणिते मार्गशीर्षे कुजाहे
तारिण्याः पादपद्मं स्मरहरहृदि(?) ध्यायमानं मुनीन्द्रैः ।
नत्वा कीराख्यदूतं सुमधुरवच[न]ः स्वीयपाठार्थमेतत्
व्यालेखीद् रामनाथो वटुरिह च गुरोः संस्मरन् श्रीयुताङ्घ्रिं ॥

The MS. is dated 1778 Śaka i.e. 1856 A. D.

Kokila-dūta by Haridāsa. With the Commentary Maṇimālā by Kālidāsa Sen. Edited by Sudhāmaya Prāmāṇika, Calcutta 1311 B. S.

## Manuscripts of the Dūta-Kāvyas

used for the preparation of this book :—

( For details, please see in loco )

1. Anila-dūta by Rāmadayālu Tarkatīrtha.
2. Bhakti-dūta by Kālīprasāda.
3. Candra-dūta by Kṛṣṇa Tarkālankāra.
4. Gopī-dūta by Lambodara Vaidya.
5. Kīra-dūta by Rāmagopāla.
6. Manodūta by Rāmarāma Śarman.
7. Pika-dūta by Ambikācaraṇa Deva.
8. Tulasī-dūta by Trilocana Śarman.

9. Tulasī-dūta by Vaidyanātha Dvija.

10. Vaka-dūta by MM. Ajitanātha Nyāyaratna of Navadvīpa.

*More than half the materials of this work, viz. "The History of the Dūta-Kāvyas of Bengal" have been collected from MSS. which still await critical editing and publication by competent scholars.*

Manodūta by Rāmarāma Śarman. MS. preserved in the Vangiya-Sahitya Parisat, Upper Circular Road, Calcutta.

MS. No. 1282. Country-made yellow paper. 3 lines ; letters 32-33 in a line. 11×4 inches size. See also Prācyavāṇī Mandir Collection of MSS., No. 11.

Manodūta by Viṣṇudāsa. MS., India Office Library, Eggeling's Catalogue, Vol. vii, p. 1470. Edited in Sanskrit Sahitya Parishat Sanskrit Text Series as No. 21, Calcutta, 1937.

Megha-dautya by Trailokyamohana Guha Niyogin of Pabna. Calcutta, 1909.

Megha-dūta, critically edited by Dr. J. B. Chaudhuri, with the commentary of Bharata Mallika and copious extracts from 13 other commentaries, mostly unpublished such as those of Kalyāṇamalla, Haragovinda Vācaspati, Rāmanātha Tarkālamkāra, Kaviratna, Kṛṣṇadāsa Vidyāvāgīśa, Śāśvata, etc. Published in Dr. K. N. Katju Series as vol. II, by the Prācyavāṇī Mandir, 3, Federation Street, Calcutta—9 in 1950.

Pādapa-dūta by Gopendra Nātha Gosvāmin. On the title-page the name of the book is given as Gaura-Viṣṇupriyā-Saṃvāda. Navadvip Kanti Press, Navadvip, Caitanyābda 449 (1934-35 A.D.)

Padma-dūta by Siddhanātha Vidyāvāgiśa, of Khagravati. Cooch Behar. Calcutta, 1925 Saṃvat 1869. I. O. L. Cat., p. 1826, (1868).

Padāṅka-dūta by Kṛṣṇanātha Sārvabhauma. Edited by Jivānanda Vidyāsāgara in the Kāvya-Saṃgraha, vol III. Calcutta, 1888, pp. 507-530.

Pāntha-dūta by Bholānātha of Tikuri, Bengal. Edited critically for the first time by Dr. J. B. Chaudhuri in the Saṃskṛta-Dūta-Kāvya-Saṃgraha as vol. V, Calcutta, 1949. For detailed informations regarding the merit of the work, its author, etc. in English, see the introduction to this volume.

Pavana-dūta by Dhoyī. Edited in the Sanskrit Sahitya Pariṣat Saṃskṛta Granthamālā as vol. 13, Calcutta, 1926.

· Pika-dūta by Rudra Nyāyapancānana. Edited in the Pracyavani, Journal of the Pracyavani Mandir by Anantalal Thakur. Pracyavani, Vol. II, Calcutta, 1945.

Pika-dūta by Ambikā Caraṇa Devaśarman. MS. available only in fragments. See Prācyavāṇī Mandir Collection of MSS—Saṃskṛta-Dūta-Kāvya-mālā.

Tulasī-dūta by Trilocana. Available only in MS. MS. No. 137. of the Prācyavāṇī Collection of Sanskrit MSS. A copy of this MS. said to have been preserved in the Sanskrit Sahitya Parishat cannot be traced now. Prācyavāṇi Mandir MS., No. 137—Substance: country-made paper. Folio 10, Lines 22-24 to a page.

Tulasī-dūta by Vaidyanātha Dvija. MS. available in fragments only. See Prācyavāṇī Mandir Collection of Sanskrit MSS.—Sanskrit-Dūta-Kāvyamālā.

Uddhava-dūta by Mādhava Kavīndra Bhaṭṭācārya of Tālitanagara. Printed in the Kāvya-Saṃgraha of Jīvānanda Vidyāsāgara, third edition., pp. 441-507 Calcutta, 1888. Also edited by Dr. John Haeberlin in the Kāvya-Saṃgraha, pp. 374-400, Calcutta, 1847.

Uddhava-Sandeśa by Rūpa Gosvāmin. Op. cit.

Vāta-dūta by Kṛṣṇanātha Nyāyapancānana Bhaṭṭācārya, Calcutta, 1886.

Vaka-dūta by Mahāmahopādhyāya Ajitanātha Nyāyaratna. *Not as yet printed.* Prācyavāṇī Mandir, Sanskrit MSS. collection, No. 143. *This is a recent copy from the only MS. of the work deposited with Sri Sailendra Nath Bhattacharya, son of the author M.M. Ajita Nyāyaratna.* The MS., as reported by the author's son, was written on modern paper by the author himself. Page I of the original MS. appears to have been irreparably lost. The MS. as at present available, begins with v. 17, on p. 2 marked as such at the very beginning. There are multifarious matters within the cover of the same MS. and the verses of the Vaka-dūta are not found in consecutive order. They are interspersed with other compositions or stray verses composed by the poet.

### Description of the copy of the MS. of Vakaduta as preserved in the Pracyavani

Substance : Foolscap paper. Folios 18. Written only on one side of the paper. Some stray verses have also been collected here from torn pages of the original. These are devoted to the eulogy of some well-known persons as Sir Gurudas Banerjee & so on.

## Part B. Works mentioned in the Introduction.

Cimanī-carita by Nīlkaṇṭha, *son of Janārdana.* See Catalogue of Sanskrit MSS. in Private Libraries of Gujrat, Kathiawar, etc.

Cetoduta, ed. by Nityānanda Śāstrin. Bhavanagar, V.S. 1970.

Ghanavṛtta by Rāmacandra S'āstrin. (a continuation of Kalidāsa's Megha-sandeśa). Twice edited; (1) by K. D. Nageswara with notes. Masulipatam, 1908; (2) by M. Acyutaram Sastri, Ellore, 1917. *Both printed in Telugu character.*

Kāvyālaṃkāra by Bhāmaha. Ed. by Batuknatha Sarma and Baladeva Upadhyaya. Benaras, 1928.

Kṛṣnalīlā by Madana Kavi. Partly ed. by Dr. J. B. Chaudhuri in the Introduction to his Ghaṭakarpara-kāvya, Calcutta 1953.

Mālatī-Mādhava. Ed. by M. Ramakrishna Tailang. Bombay, 1926.

Mayūra-Sandes'a by Udaya. Ed. by C. Kunhan Raja. Poona, 1944. Poona Oriental Series, No. 84.

Megha-pratisandes'a by Mandikal Rāmasāstrin. Ed. by the author. Mysore, Jayalay Press, 1923.

Meghdūta-Samasyā-lekha by Meghavijaya. Published by Jain Atmananda Sabha, Bhawanagar, V. S. 1970,

Nemi-dūta by Mantrin Vikrama. Kavya-mala, Part II, Nirnaya-sagar Press, Bombay.

Pārs'vābhyudaya by Jinasena Ācārya. Nirnaya-sagar Press, Bombay, 1909.

S'ila-dūta. Printed in Benares.

S'uka-Sandes'a by Lakṣmidāsa. Descriptive Catalogue of Sanskrit MSS. deposited in Madras MSS. Library, XX. 7964.

Vanmandana—Guna—duta kavya. Ed. by Dr. J. B. Chaudhuri as Vol. II of Sanskrita-duta-kavya-samgraha from the Pracyavani Mandir, Calcutta, 1941.

Yakṣa-milana-kāvya by MM. Parameswara Jha of Mithila. Ed. from Darbhanga.

# Notes.

P. 2, ll. 11-12. But see footnote, p. 66.

P. 25. Date of the author—16th Century A. D.

P. 33. Date of the author—17th Century A. D.

P. 51. श्रीकृष्ण तर्कालङ्कार, author of दायभाग—टीका, दायाधिकार-क्रम—संग्रह and the विवृति on the श्राद्धविवेक of शूलपाणि। He flourished during the middle of the 18th Century.

P. 65. The contents of this page should be read immediately after page 59. He must have flourished about 200 years ago. In l. 4, श्राधुनिकेन should be read as नात्याधुनिकेन।

Pp. 70-71. भक्तिदूत and कीरदूत। Read after पान्थदूत।

P. 83. रघुनाथ दास was a contemporary of रूपगोस्वामिन्। His work has been placed in this इतिहास last of all, as the quotations here have been made from the Bengali Translation of the work, the original being irreparably lost to us.

# General Index

*Arabic letters refer to the pages of the body of the work and Rcman figures to those of the Introduction*

इति चट्टग्राम-मण्डलान्तर्गत-कधुरखील—ग्रामनिवासि—रसिकचन्द्र-नयनतारासुत—वङ्गीयराष्ट्राधिकार—संस्कृतशिक्षा—परिषदध्यक्षेण डक्टर—श्रीयतीन्द्रविमलचतुर्धुरीण—काव्यतीर्थेन प्रणीतो वङ्गीयदूतकाव्येतिहासः समाप्तः ॥

# Publications of the Pracyavani

## 1. Pracyavani Sarvajanina Granthamala ( In Bengali )

1. NIMBARKA-DARSANA—( Comparative studies of the systems of Śaṃkara, Rāmānuja, Bhāskara, Śrīkaṇṭha, Baladeva and Nimbārka )—Dr. Roma Chaudhuri, M. A., D. Phil ( Oxon ), F. A. S. Rs. 2/8/0 only.

2. JAINA GURU MAHAVIRA—Dr. Bimala Charan Law ( M. A., B. L., Ph. D., D. Litt., etc. ) Re. 1/-

3. BHARATER PUNYATIRTHA—Dr. B. C. Law. Re. 1/-

4. VEDANTA & SUFI DARSANA—( A comparative study of Sūfism and Vedānta )—Dr. Roma Chaudhuri, M. A., D. Phil, F. A. S. Rs. 4/-

5. CONTRIBUTION OF BENGAL VAISNAVAS TO SANSKRIT LITERATURE—Dr. J. B. Chaudhuri. Re. 1/-

6. SANSKRITPHOBIA AND ITS REMEDY—Dr. Roma Chaudhuri. Re. 1/-

7. SONGS OF KAVI KAMINIKUMAR—Compiled by Sri Swarnakamal Bhattacharya, M. A. As. -/8/- only

8. AVANTI—History of Avanti and its Capital Ujjain—Dr. B. C. Law. Re. 1/- only

9. SENTIMENT OF PATHOS IN BENGALI LITERATURE—Swarnakamal Bhattacharya Re. 1/- only

10. VAISNAVACARYA VISVANATHA ( A biographical survey and critical estimate of the works of Visvanatha Chakravarty)—Sri Nanigopal Bhattacharya M. A. As. -/8/- only

11. PANDIT ISWARCHANDRA VIDYASAGAR by Dr. J. B. Chaudhuri. As. -/8/- only

12. SONGS OF LALAN FAKIR—Compiled and edited by Md. Monsur Uddin, M. A. Re. 1/- only.

## 2. Pracyavani Sanskrit Series

1. THE RASIKA-JIVANA by Gadādhara Bhaṭṭācārya (A Sanskrit Anthology of Mediaeval India). Critically edited by Dr. J. B. Chaudhuri. Rs. 7/8/0

2. THE PADYAVENI—By Veṇīdatta (The best Sanskrit Anthology of Mediaeval India). Edited by Dr. J. B. Chaudhuri for the first time. Rs 10/-

3. THE ROMAVALI SATAKA—By Rāmacandra Bhaṭṭā-caarya. Edited by Dr. J. B. Chaudhuri. Re. 1/-

4. THE SABHYALAMKARANA—By Govindajit. A Sanskrit Anthology of Mediaeval India. Edited by Dr. J. B. Chaudhuri Rs. 3/-

5. THE TITHI-VIVEKA of MM. Śūlapāṇi with the commentary of Śrīnātha Ācāryacūḍāmaṇi critically edited for the first time—J. B. Chaudhuri. Rs. 2/-

6 THE DHURTA-VIDAMBANA—of Amareśvara Śarman. Edited by Dr. J. B. Chaudhuri. Rs. 3/-

7. THE RAMACANDRA-YASAH-PRABANDHA—a fine specimen of Sanskrit prose during Muslim rule in India—by Ākbarīya-Kālidāsa. As. -/8/- only

8. THE SANGITA-MALIKA of Mahammad Shah critically edited for the first time by Dr. J. B. Chaudhuri. One of the best Contributions of Muslims to fine Arts in Sanskrit. Rs. 3/-

9. THE ABDULLAH-CARITA of Laşkmīpati critically edited for the first time by Dr. J B. Chaudhuri with an introduction in English, appendices, etc. Rs. 8/-

10. THE BHUPA-SATAKA of Rāghava Vācaspati Bhaṭṭācārya. Edited by Dr. J. B. Chaudhuri Re. 1/-

11. THE PANTHA-DUTA of Poet Bholānātha of Bengal critically edited for the first time by Dr. J. B. Chaudhuri. Re. 1/

12. THE GHATAKARPARA-KAVYA, critically edited for the first time with an original commentary in Sanskrit by Dr. J. B. Chaudhuri and copious extracts from nine unpublished commentaries, English Translation, notes, etc. Rs. 4/- (Rexin Bound).

13. THE VĪRABHADRACAMPU-KAVYA by Padmanābha Miśra, a historical Sanskrit Campū, critically edited for the first time by Dr. J. B. Chaudhuri. Rs. 2/8/-

14. THE JĀMAVIJAYA-KĀVYA by Vāṇīnātha, a history of the Royal Family of Nawanagar, critically edited for the first time by Dr. J. B. Chaudhuri. Rs. 5/- only.

15. THE MEGHADŪTA by Kālidāsa with the commentaries of Śāśvata and Sanātana Gosvāmin, critically edited for the first time by Dr. J. B. Chaudhuri, with Mallinātha's Commentary as Appendix. Rs. 8/-

16. THE JĀTAKA-PADDHATY-UDĀHARANA by Krişņa Daivajna (on the life of Khān Khānān Abdur Rahim), critically edited for the first time by Dr. J. B. Chaudhuri, (In the Press).

17. THE PADĀNKA-DŪTA by Krişņanātha Sārvabhauma, critically edited for the first time with an original commentary called Bhāsvatī by Dr. J. B. Chaudhuri. (In the Press)

18. THE WORKS OF MAHĀPRABHU SRI CAITANYA, critically edited for the first time by Dr. J. B. Chaudhuri. (In the Press)

## 3. Dr. K. N. Katju Series

1. CHILDREN'S SANSKRIT LITERATURE. Sanskrit Lipi Siksha. vol. 1 Rs. -/4/-

2. THE MEGHADŪTA OF KALIDASA. with the commentary of Bharata Mallika and copious extracts from various other commentaries of Sanātana Gosvāmin, Haragovinda Vācaspati, Kalyāṇamalla, Rāmanātha Tarkālaṇkara, Śāśvata, Kaviratna, Kriṣṇadās Vidyāvāgisa, etc., a Synoptical table of the verses of the Megha-dūta literature, various Appendics and Indices, etc., by Dr, J. B. Chaudhuri, Rs. 8/-

3. THE SURJANA-CARITA—A Historical Mahākāvya by Candraśekhara of Bengal. Critically edited for the first time by Dr. J. B. Chaudhuri with an introduction in English, Appendix, Index, etc. The work gives an accurate history of the Hara dynasty of Bundi, Rajasthan. An unique Contribution to Sanskrit Literature of Seventeenth Century during the Muslim Rule in India. Rs. 8/-

4. ŚAKTI-SĀDHANAM—A Poetical Composition by Dr. J. B. Chaudhuri, advocating among other things, the claims of Sanskrit for being the national language of India, National Unity on Linguistic basis, Inter-State harmony, the rehabilitations of refugees in Indian Union, etc. Re. 1/-

5. THE SAMUDRA-SANGAMA of Md. Dara Shukah, critically edited for the first time by Dr. J. B. Chaudhuri. Tr. by Dr. Roma Chaudhuri M. A. D. Phil (oxon), F. A. S. Rs. 5/-

## 4. Pracyavani Translation Series

1. THE BHASKARA BHASYA on the Brahma Sūtras Translated into English by Dr. Roma Chaudhuri ( in the Press).

2. The SRIKANTHA BHASYA on the Brahma Sūtras Translated into English by Dr. Roma Chaudhuri (in the Press).

## 5. Pracyavani Research Series

1. PRACINA BHARATER DANDANITI—MM. Yogendra Nātha Tarkatīrtha Rs. 5/-

2. THE POSITION OF WOMEN IN THE VEDIC RITUAL—Dr. J. B. Chaudhuri Vols. 1 & 2 Rs. 8/-

3. THE CONTRIBUTION OF MUSLIMS TO SANSKRIT LITERATURE—Dr. J. B. Chaudhuri. Vol. I Rs. 5/-

4. THE CONTRIBUTION OF MUSLIMS TO SANSKRIT LITERATURE Vol. II. (In the Press).

5 KHĀN KHĀNĀN ABDUR RAHIM AND CONTEPORARY SANSKRIT LEARNING. First systematic study of the development of Sanskrit Literature in all its branches during the period 1550—1650 A.D. Rs. 5/-

6. BHARATER DARSAN SAMANVAYA—MM. Yogendra Nath Tarkatirtha. Re. 1/- only.

7. VANGIYA-DUTA-KAVYETIHASA (in Sanskrit). History of the Sanskrit Dūta-Kāvyas of Bengal. First exhaustive and systematic treatise on the subject on a chronological basis. Materials mostly collected from unpublished MSS. by Dr. J. B, Chaudhuri. Rs 5/-

8. MUSLIM PATRONAGE TO SANSKRIT LEARNING. VOL. 1. 2nd. edition ( soon to be published ).

9. MUSLIM PATRONAGE TO SANSKRIT LEARNING. Vol. 2. In the Press.

## 6. Comparative Religion and Philosophy Series

1, SUFISM AND VEDANTA—Dr. Roma Chaudhuri (in English). Vols. 1 & 2 Rs. 8/-

2. A Comparative study of Hinduism and Islam on the basis of Dara's Samudra-Sangam by Dr. Rama Chaudhuri. ( In the Press.

## 7. Pracyavani Purnachandra Sinha Smriti-Tarpan Granthamala

1. SRI SRI CANDI with an Introduction in Bengali on the history and significance of the Durgāpujā—Dr. J. B. Chaudhuri. Re. 1/- only.

2 THE KATHOPANISAD with an Introduction and Translation in Bengali—Dr. J. B. Chaudhuri Re. 1/-

3. THE PURNA-CHANDRA SMRITI-TARPANA. This work contains articles by the Mahāmahopādhāyas and other leading Scholars of Bengal on Purna Chandra Sinha, one of the foremost Patrons of the Prachyavani Mandir. Supplied cost free on request.

4. VANGIYA SANSKRITA VISVAVIDYALAYA. Being the address of Dr. J. B. Chaudhuri on the occasion of the first meeting of the Founders of the Vangiya Sanskrit Viśva Vidyālaya. As. -/4/-

## 8. Miscellaneous Publication

1. PRACYAVANI—English Journal of the Pracyavani, Vols. 1—9 (1944-52) Rs. 8/8/- each. Vol. 10 (1953) Rs. 12/-

2. PRACYAVANI PRABANDHAVALI. Collections of Articles by the erudite Scholars of the Pracyavani Mandira. Vols. 1—8 Re 1/- each.

3. THE SRIMAD BHAGAVAD GITA with an Introduction and Translation in Bengali by Dr. J. B. Chaudhuri Rs. 3/-.

In this work Dr. J. B. Chaudhuri deals for the first time in any language with the History of the Interpretations of the Bhagavad-gītā from early times down to the present day. It contains articles on various doctrines such as Karmavāda, Jnānavādā, Bhaktivāda, etc. by such eminant scholars as MM. Yogendra Nath Tarkatirtha, MM. Chinnaswami Shastri, Principal Radha Govinda Nath, Principal Dr. Rama Chaudhuri, Adhyapak Prankishor Goswami and Pt. Taranath Tarkatirtha.

Apart from the above mentioned works, the Pracyavani may supply the following works on request :—

1. THE PADYAMRITA-TARANGINI by Hari Bhāskara. An anthology of Sanskrit verses. Price Rs 10/- only.

2. THE SUKTISUNDARA by Sundaradeva. Edited by Dr. J. B. Chaudhuri. Rs. 2/-

3. THE CONTRIBUTIONS OF WOMEN TO SANSKRIT LITERATURE—by Dr. J. B. Chaudhuri in seven big volumes :— Rs. 54/-

Vol. 1. SANSKRIT DRAMA. It contains the commentary of Sundarī and Kamalā called Camatkāra-Candrikā on the Viddhaśāla-bhanjikā of Rājaśekhara. Rs. 8/-

Vol. 2. SANSKRIT POETRY. Sanskrit Poetesses Part I. This Volume contains an account of a very large number of Sanskrit Poetesses of all ages and a comparative study of Sanskrit Po tesses with Female Vedic Seers, Buddhist Therī Poetesses and Prakrit Poetessses. An Outstanding Record of literary achievements of Women Sanskrit Poets of Ancient, Mediaeval and Modern India. 2nd. edition. Rs. 8/-

Vols 3-4 (bound together) PAURANIC and SMRITI LITERATURE. Contributions of Women to Pauranic and Smriti Literature. It also contains critical editions of Bīnābayī's Dvārakā-pattala and Visvāsadevī's Gangā-vākyāvalī. Rs. 15/-

Vol. 5. TANTRAS. The Sudarśana by Prāṇamanjarī. Being a commentary by Prāṇamanjarī on the Tantrarāja Tantra. An outstanding record of the achievements of Indian Women in the abstruse technicalities of the Tantra Sastra. Rs. 5/-

Vol. 6. SANSKRIT POETRY. SANSKRIT POETESSES. Part B. This volume contains accounts of the contributions of Indian Women to Sanskrit Poetry—six complete works, etc.. with critical editions of two of their works, viz. Vaidyanātha-Prāsāda-Praśasti of Devakumārikā and Santānagopāl-Kāvya by Lakṣmī Devī. Rs. 8/-

Vol. 7. SMRITI LITERATURE. It contains, among other things, a critical account of the outstanding scholarly achievements of Lakṣmī Devī Pāyagunde and a critical edition of the Kāla-Mādhava-Lakṣmī by her. Part I only. Rs. 10/-

Vols. 8—10. SMRITI LITERATURE. In the Press.

4. SANSKRIT DUTA-KAVYA SANGRAHA, Critically edited for the first time by Dr. J. B. Chaudhuri. 4 Volumes, Rs. 6/8- only.

Vol. I. Bhramaradūta-Kāvya by Rudra Nyāyapancānana. Rs. 1/8/-

Nols II—III. The Vāṇma-dnana-guṇadūta-Kāvya by Vīrevs'ara and the Candra-dūta-Kāvya by Jambu Kavi (bound together). Rs. 2/8/-

Vol. IV. The Haṃsa-dūta-Kāvya by Vāmana Bhaṭṭa Bāṇa. Rs. 2/8/-

5. CONTRIBUTIONS OF BENGAL TO SMRITI LITERATURE by Dr. J. B. Chaudhuri. Vols. 1 and 3. Rs. 3/8-

6. CATALOGUE OF THE LIBRARY OF THE INDIA OFFICE. SANSKRIT AND PRAKRIT BOOKS by Dr. J. B. Chaudhuri. In collaboration with Dr. Pran Nath. Throughly revised by Dr. J. B. Chaudhuri during the latter part of his stay in England (1933-38).

Vol. 1. Section I (A-G.) London, 1938. Printed by order of the Secretary of State for India. Price £ 1-1-0d net.

Vol. II. Section II (H-Kṛṣṇa-Līlāmṛta). London, 1951, Printed by order of the Secretary of State for Commonwealth Relations. Price £ 1-10-0 net.

Vol. III. Section III (Kṛṣṇa-Līlāmṛta-R.) London, 1953. Printed by order of the Secretary of State for Commonwealth Relations. £ 3-10-0 net.

Vol, IV. (In the Press).

---